तद् ह स्माह हिरण्यदन् वैदः ।...... द्यौरन्तरिक्षे प्रतिष्ठिता । अन्तरिक्षं पृथिव्याम् । पृथिव्यप्सु । आपः सत्ये । सत्यं ब्रह्मणि । ब्रह्म तपसि । इत्येता एव तत्प्रतिष्ठाः प्रतिष्ठिष्ठन्तीरिदं सर्वमनु-प्रतिष्ठिष्ठति यदिदं किञ्च । ( ऐ० ब्रा० ३।६ )

तम इव ह्यनपहतपाप्मानः । ( ऐ० ब्रा० ४।२५ )

दिवेव ह्यपहतपाप्मानः । ( ऐ० ब्रा० ४।२५ )

दिवेव दिवसा इव प्रकाशयुक्ताः ।

न ह वा अव्रतस्य देवा हविरश्नन्ति । तस्मादुपवसति उत मे देवा हविरश्नीयुरिति । ( ऐ० ब्रा० ७।११ )

मा प्र गाम पथो वयम् ( ऐ० ब्रा० ३।११ )

ऋक्पाद एषोऽत्र समुद्धृतः । सन्मार्गाद् भ्रष्टा मा भूमेत्यर्थः ।

रक्षांसि वै पाप्मात्रिणः । ( ऐ० ब्रा० २।२ )

अत्रिणो भक्षणशीलाः । अन्येषां पीडाकरा इति यावत् । यानि रक्षांसि सन्ति यश्च पाप्मा विद्यते तत्सर्वमत्रिन्शब्देन विवक्षितम् इत्यर्थः ( सायणः )

वाचो वाव तौ स्तनौ सत्यानृते वाव ते । अवत्येनं सत्यं नैनमनृतं हिनस्ति य एवं वेद । ( ऐ० ब्रा० ४।१ )

विश्वं समत्रिणं दहेति । रक्षांसि वै पाप्मात्रिणः । रक्षांसि पाप्मानं दहेत्येव तदाह । ( ऐ० ब्रा० २।२ )

श्रद्धा पत्नी सत्यं यजमानः । श्रद्धा सत्यं तदित्युत्तमं मिथुनम् । श्रद्धया सत्येन मिथुनेन स्वर्गाँल्लोकान् जयतीति ।

( ऐ० ब्रा० ७।१० )

अनु वै श्रेयांसं पर्यावर्त्तन्ते। ( ऐ० ब्रा० २।२० )

विद्यया वृत्तादिना च श्रेयांसमाचार्यादिकमनुगम्य शिष्यादयः परितः संचरन्ति ( सायणः )

तूष्णीं वै श्रेयस आकाङ्क्षन्ते। ( ऐ० ब्रा० ७।१२ )

लोके हि सेवकादयस्तूष्णींभूता एव सन्तः श्रेष्ठान् राजगुर्वादीन् उपेत्य स्वाभीष्टं प्रार्थयन्त इति भावः।

दुरववदं हि श्रेयसः। ( ऐ० ब्रा० ५।२२ )

श्रेयसः पुरुषस्याचरणं हि अववादेन निन्दया वदितुमयोग्यम्।

प्रति वै श्रेयांसमायन्तमुत्तिष्ठन्ति। ( ऐ० ब्रा० २।२० )

लोके हि श्रेयांसमागच्छन्तं प्रति उत्तिष्ठन्त्येवेत्यर्थः।

## (७) संपत्तेर्महत्त्वं दारिद्र्यस्य च निन्दा

"अग्निना रयिमश्नवत् पोषमेव दिवेदिवे। यशसं वीरवत्तमम्॥" ( ऋ० १।१।३ ), "एन्द्र सानसिं रयिं सजित्वानं सदासहम्। वर्षिष्ठमूतये भर॥ ( ऋ० १।८।१ ) इत्येवमनेकधाभ्युदयस्याभिलषणीयतामभिदधत्सु श्रुतिवाक्येषु। अदीनाः स्याम शरदः शतम् ( यजु० ३६।२४ ) इत्येवं च दैन्यं यत्र तत्र निन्द्यते। सोऽयमेवार्थ ऐतरेयब्राह्मणेऽप्यत्र नानाप्रकारेण प्रपञ्चितः। तद्यथा—

अशनाया वै पाप्मामतिः। ( ऐ० ब्रा० २।२ )

अशनाया क्षुधा। अमतिः बुद्धिभ्रंशः। अमतिशब्देन क्षुधा वा पापं

वाभिधीयते। तयोर्बुद्धिभ्रंशहेतुत्वात्। (सायणः)। तथा च लौकिका-नामाभाणकः "बुभुक्षितः किन्न करोति पापम्" इति।

अस्यां वाव स न प्रतिविष्ठति यो न प्रतितिष्ठति।

(ऐ० ब्रा० १।१)

यः प्रजापशुरूपया प्रतिष्ठया वर्जितः, सोऽस्या वाव कृत्स्नायामप्येतस्या भूमौ न प्रतितिष्ठति श्लाघ्यो न भवति। तस्मादप्रतिष्ठा परिहर्तव्येत्यर्थः। (सायणः)। अत्र लोके प्रजाधनादिसंपत्तिविहीनस्य नहि कापि प्रतिष्ठा भवतीत्यर्थः।

गृहा वै प्रतिष्ठा (ऐ० ब्रा० ३।२४)

ज्योतिर्वै शुक्रं हिरण्यम्। (ऐ० ब्रा० ७।१२)

शुक्रं ज्योतिः। अत्यन्तं भास्वरः प्रकाशः।

तस्मादु श्रेष्ठी पात्रे रोचयत्येव यं कामयते।

(ऐ० ब्रा० ३।३०)

लोके हि कश्चिद् धनपतिर्यं कामयते तं पात्रे रोचयत्येव। तेन सह पानभोजनादिकं कृत्वा सर्वेभ्यो रोचयत्येवेत्यर्थः।

तस्य वित्ता दीक्षा वित्तं तपो यस्य पशवः सन्ति

(ऐ० ब्रा० ३।२५)

पश्चेव हि हीनोऽनुसंजिगमिषति। (ऐ० ब्रा० २।३६)

धनादिराहित्यहेतुकदैन्येन युक्त आत्मग्लान्या पश्चादेव जिगमिषतीति लोके प्रसिद्धमिति भावः।

पुरुषः पशुषु प्रतिष्ठितोऽस्ति चैनानधि च तिष्ठति। वशे चास्य।

(ऐ० ब्रा० ४।३)

वशे चास्य। सर्वे पशवो वर्तन्त इति शेषः।

**यथा ह वा इदमनो वा रथो वाक्षौ वर्तत एवं हैवाक्षो वर्तते।**
**( ऐ० ब्रा० ४।७ )**

अनः स्वल्पशकटम्। अक्षः चक्रस्य भ्रमणस्थाने मपोमिश्रेण तैलेनाभ्यक्तः। वर्तते स्वकार्यसंपादनार्थं सहसा प्रवर्तते। एवं लोके जनस्तैलस्थानीयेनान्नादिनाभ्यवहृतेनैव सुपुष्टः संसारयात्रायां प्रवर्तत इति भावः।

**यदेळवा अभिगेष्णाश्चरन्ति अथान्नाद्यं प्रजायते।**
**( ऐ०ब्रा० ५।३ )**

इळशब्दोऽन्नवाची, तद्येषां कर्षकाणामस्ति ते कर्षका इळवाः। ते च वर्षन्तं पर्जन्यमभिलक्ष्य 'गेष्णाः' हर्षेण गायन्तो यदा चरन्ति, अथ तदानीमन्नाद्यं प्रजायते। अथवा प्रसन्नाः कर्षका यत्र तत्रैवान्नाद्यं जायत इत्यर्थः। तथा च देशस्य समृद्धिः प्रसन्नान् कर्षकाननुसरतीति भावः।

**यशो वै हिरण्यम्। ( ऐ० ब्रा० ७।१८ )**

**यस्यैवेह भूयिष्ठमन्नं भवति स एव भूयिष्ठं लोके विराजति।**
**( ऐ० ब्रा० १।५ )**

**यो वै भवति यः श्रेष्ठतामश्नुते तस्य वाचं प्रोदितामनुप्रवदन्ति।**
**( ऐ० ब्रा० २।१५ )**

लोके हि ऐश्वर्येण विद्यावृत्तादिभिर्वा श्रेष्ठत्वमुपनुञ्जानस्य नरस्यादेशमन्येऽनुवर्तन्त इत्यर्थः।

**यो वै भवति यः श्रेष्ठतामश्नुते स महान् भवति।**
**( ऐ० ब्रा० ३।२१ )**

यो वै भवति यः श्रेष्ठतामश्नुते स सामन् भवति।

( ऐ० ब्रा० ३।२३ )

सामन् भवति। सर्वेषु स्वकीयत्वबुद्ध्या समदृष्टिर्भवतीति सायणः।

यो वै भवति यः श्रेष्ठतामश्नुते स किल्बिषं भवति।

( ऐ० ब्रा० १।१३ )

श्रेष्ठपदमासवतः पापप्रवणता प्रायेण संभाव्यते। अतस्तेन सततम-मूढेनात्मचरितमवेक्षणीयमिति भावः।

## (८) पुत्रस्य महिमा गार्हस्थ्यजीवनञ्च

"आत्मा वै पुत्रनामासि" इत्येवं श्रुत्या प्रतिपादितः पुत्रस्य महिमा गार्हस्थ्यजीवनसंबन्धिनोऽन्ये च विषया ब्राह्मणेऽत्र हृदयंगमया गिरा गीर्यन्ते। तथा हि—

स( हरिश्चन्द्रः ) ह नारदं पप्रच्छ—

यन्न्विमं पुत्रमिच्छन्ति ये विजानन्ति ये च न।
किंस्वित्पुत्रेण विन्दते तन्म आचक्ष्व नारद॥ १॥ इति।

स एकया पृष्टो दशभिः प्रत्युवाच—

ऋणमस्मिन्संनयत्यमृतत्वं च गच्छति।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्॥२॥
यावन्तः पृथिव्यां भोगा यावन्तो जातवेदसि।
यावन्तो अप्सु प्राणिनां भूयान्पुत्रे पितुस्ततः॥ ३॥
शश्वत्पुत्रेण पितरोऽत्यायन् बहुलं तमः।
आत्मा हि जज्ञ आत्मनः स इरावत्यतितारिणी॥ ४॥

किन्तु मलं किमजिनं किमु श्मश्रूणि किं तपः ।
पुत्रं ब्रह्माण इच्छध्वं स वै लोकोऽवदावदः ॥ ५ ॥
अन्नं ह प्राणः शरणं ह वासो रूपं हिरण्यं पशवो विवाहाः
सखा ह जाया कृपणं ह दुहिता ज्योतिर्ह पुत्रः परमे व्योमन् ॥६
पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् ।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥ ७ ॥
तज्जाया जाया भवति यदस्यां जायते पुनः ।
आभूतिरेषा भूतिर्बीजमेतन्निधीयते ॥ ८ ॥
देवाश्चैतामृषयश्च तेजः समभरन् महत् ।
देवा मनुष्यानब्रुवन्नेषा वो जननी पुनः ॥ ९ ॥
नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः ।
तस्मात्तु पुत्रो मातरं स्वसारं चाधिरोहति ॥ १० ॥
एष पन्था उरुगायः सुशेवो यं पुत्रिण आक्रमन्ते विशोकाः
तं पश्यन्ति पशवो वयांसि च तस्मात्ते मात्रापि मिथुनीभवन्ति॥१

( ऐ० ब्रा० ७।१३ )

ये मनुष्यादयो विजानन्ति । विवेकज्ञानयुक्ताः । ये च पश्वाद न विजानन्ति । विवेकज्ञानरहिताः ॥ १ ॥

उच्चयति साम्यगवस्थापयति ॥ २ ॥

पृथिव्यां भोगा निवासादयः । जातवेदसि दहनपचनादयः । अ स्नानादयः ॥ ३ ॥

शश्वत्सर्वदा । तमो दुःखम् । स पुत्र इरावतो अन्नयुक्ता अ तारिणी नौरिव ॥ ४ ॥

अत्र मलाजिनश्मश्रुतपःशब्दैराश्रमचतुष्टयं विवक्षितम्। मलरूपाभ्यां शुक्रशोणिताभ्यां संयोगात् मलशब्देन गार्हस्थ्यं विवक्षितम्। कृष्णाजिनसंयोगादजिनशब्देन ब्रह्मचर्यं विवक्षितम्। क्षौरकर्मराहित्यात् श्मश्रुशब्देन वानप्रस्थ्यं विवक्षितम्।.. तपःशब्देन पारिव्राज्यं विवक्षितम्।... अवदावदो लोकः। वदितुमयोग्यानि निन्दावाक्यान्यवदाः। तैर्वाक्यैर्नोद्यते न कथ्यत इत्यवदावदः।.. दोषराहित्यान्निन्दानर्ह इत्यर्थः। ( सायणः ) ॥ ५ ॥

भवत्यस्या पुत्ररूपेण पतिरित्येषा भूतिः। रेतोरूपेणागत्य अस्या पुत्ररूपेण भवतीति आभूतिः ॥ ८ ॥

महदोजः समभरन्। पुत्रोत्पादनाय संपादितवन्तः ॥ ६ ॥

उरुगायः। उरुभिर्महद्भिर्गीयते। सुशेवः सुष्ठु सेवितु योग्यः ॥११॥

**अति वै प्रजात्मानमति पशवः।** ( ऐ० ब्रा० ४।६ )

आत्मनोऽपेक्षया स्वप्रजायाः पशूनां च बहुत्वं प्रसिद्धमेवेति भावः।

**प्रजा वै तन्तुः।** ( ऐ० ब्रा० ३।११ )

तद्यथैवादः प्रियः पुत्रः पितरं प्रिया वा जाया पतिं सुखं **शिवमुपस्पृशत्याविस्रस एवं हैव**······(ऐ० ब्रा० ८।२० )

आ अविस्रसः। आ अविस्रंसनाद्। देहपातपर्यन्तमित्यर्थः। ( सायणः )

**स्त्रियः पत्याविच्छन्ते। तस्माद्ु स्त्र्यनुरात्रं पत्याविच्छते।**

( ऐ० ब्रा० ३।२२ )

**तस्मादेकस्य बह्व्यो जाया भवन्ति नैकस्यै बहवः सह पतयः।**

( ऐ० ब्रा० ३।२३ )

यदि ह वा अपि बह्व्य इव जायाः पतिर्वाव तासां मिथुनम्।

( ऐ० ब्रा० ३।४७ )

तद्यथैवादः स्नुषा श्वशुराल्लज्जमाना निलीयमानैत्येवमेव सा सेना भज्यमाना निलीयमानैति यत्रैवं विद्वांस्तृणमुभयतः परिच्छिद्येतरां सेनामभ्यस्यति.. ( ऐ० ब्रा० ३।२२ )

तस्मात्समानोदर्या स्वसान्योदर्यायै जायाया अनुजीविनी जीवति। ( ऐ० ब्रा० ३।३७ )

लोकस्थितेर्वर्णनमेतत्।

एतद्वै सर्वं स्वस्त्ययनं यत् प्रेति चेति चेति। तद्योऽस्य प्रियः स्यात्तमेतेनानुमन्त्रयेत प्रेति चेति चेति स्वस्त्येव गच्छति स्वस्ति पुनरागच्छति। ( ऐ० ब्रा० ३।२६ )

'प्र'-इत्येकम्, 'आ'-इति च द्वितीयं पदम्। तदेतत् सर्वं स्वस्त्ययनं ग्रामान्तरं जिगमिषवे सर्वक्षेमप्रापकमित्यर्थः। देशान्तरं गन्तुमुद्यतं प्रति 'गच्छतु भवान् सकुशलं पुनरागमनाय' इत्येवं शुभाशंसनमेवात्राभिप्रेतमिति प्रतीयते।

तस्माद्धाप्येतर्हि पितरं पुत्रा निष्ठावोऽवयदितेत्येवाचक्षते।

( ऐ० ब्रा० ५।१४ )

धनविभागादेर्धर्मरहस्यं निःशेषेण स्थितिर्निर्णयो निष्ठा, सा यस्मिन्नस्ति स निष्ठावः। ज्येष्ठपुत्रस्यैतावद् द्वितीयस्यैतावदन्यस्यैतावद् इत्यवच्छिद्य वदितुं समर्थोऽवयदिता। ( सायणः )

तस्माद्धाप्येतर्हि वित्त्यां व्याहुर्यथावित्तमेव न इति।

( ऐ० ब्रा० ३।२८ )

तस्मादधस्तेऽपि कस्यापि द्रव्यस्य स्वामित्वविषयके प्रश्ने 'अस्माकं लब्धमनतिक्रम्यैव स्वामित्वं युक्तम्' इत्याहुः। यद्वस्तु येन लब्धं न्यायतः प्राप्तं तत् तस्यैवेति लौकिकन्याय इति भावः।

**यो वै भागिनं भागान् नुदते, चयते वैनम्। स यदि वैनं न चयते, अथ पुत्रमथ पौत्रं चयते त्वेवैनमिति। ( ऐ० ब्रा० २।७ )**

नुदते नाशयति। चयते न्याययति। एनं विनाशयितारम्। अयं भावः—भागभ्रष्टो मनसि द्वेषं गृहीत्वा स्वविरोधिनं यदाकदाचित् येनापि प्रकारेण विनाशयत्येवेति। ( सायणः )। ततश्चान्यायेन परस्य भागो द्रव्यं वा न ग्रहीतव्यमिति भावः।

## ( ९ ) दानमातिथ्यं च

दानस्य आतिथ्यस्य च श्रैष्ठ्यं प्रतिपादयन्त्योऽपि श्रुतयोऽत्र श्रूयन्ते। तद्यथा—

**एतद्ध वाचो जितं यद् ददामीत्याह। ( ऐ० ब्रा० ८।६ )**

**कोऽनद्धापुरुष इति ? न देवान् न पितॄन् न मनुष्यानिति। ( ऐ० ब्रा० ७।६ )**

अनद्धापुरुषः। अद्धेति सत्यनाम। तद्धपरीत्यादनृतः पुरुषः। यो 'न देवान्' इत्यादौ 'यः पूजयेत्' इति शेषः। मनुष्यान् अतिथीन्।

**तस्मादाहुर्न सायमतिथिरपरुध्य इति। ( ऐ० ब्रा० ५।३० )**

अपरुध्यो निराकरणीयः।

**मनुष्यराज आगतेऽन्यस्मिन्वार्हत्युक्षाणं वा वेहतं वा क्षदन्ते। ( ऐ० ब्रा० १।१५ )**

वेदतं गर्भघातिनीं वृद्धा गाम्। त्दन्ते हिंसन्ति। (सायणः)

यदा वा अतिथिं परिवेविषत्यापीन इव वै स तर्हि भवति।

(ऐ० ब्रा० १।१७)

आपीन इव। वृद्धिं प्राप्त इव। प्रसन्नात्मेति यावत्।

यावन्तः खलु वै राजानमनुयन्ति तेभ्यः सर्वेभ्य आतिथ्यं क्रियते। (ऐ० ब्रा० १।१५)

शिरो वा एतद्यज्ञस्य यदातिथ्यम्। (ऐ० ब्रा० १।२५)

आतिथ्येष्टेर्यज्ञशिरोरूपत्वमित्यर्थः।

## (१०) राजनीतिः

राजनीतिविषयनिघनोऽनेके विषया अत्र ब्राह्मणे यत्र तत्र श्रूयन्ते। तथा च राजपुरोहितस्य स्वरूपं महिमा च, राष्ट्रं प्रति राज्ञः कर्तव्यम्, ब्राह्मणस्य चत्रस्य च परस्परं संबन्धः, शत्रुजयः, देशभेदेन राज्यपद्धतेर्भेदा इत्यादयो विषया वर्णिता दृश्यन्ते। तद्यथा—

(क) पुरोहितमहिमा—

अग्नीन्वा एषः स्वर्ग्यान् राजोद्धरते यत् पुरोहितम्। तस्य पुरोहित एवाहवनीयो भवति, जाया गार्हपत्यः, पुत्रोऽन्वाहार्यपचनः। स यत्पुरोहिताय करोत्याहवनीय एव तज्जुहोति। अथ यज्जायायै करोति गार्हपत्य एव तज्जुहोति। अथ यत् पुत्राय करोत्यन्वाहार्यपचन एव तज्जुहोति। त एनं शान्ततनवोऽभिहुता अभिप्रीताः स्वर्गं लोकमभिवहन्ति चत्रं च बलं च राष्ट्रं च विशं च। त एवैनमशान्ततनवोऽनभिहुता अनभिप्रीताः स्वर्गाल्लोकान्नुदन्ते चत्राच्च बलाच्च राष्ट्राच्च विशश्च। (ऐ० ब्रा० ८।२४)

तस्य ह राज्ञः पुरोहितादय एव आहवनीयाद्यग्निस्थानीयाः। अन्वाहार्यपचनो दक्षिणाग्निः। राजा पुरोहितादिभ्यो यदपेक्षितं करोति तदेतद् आहवनीयादिषु होमसमानम्। शान्ततनवः। उग्ररूपत्वं परित्यज्य अभीष्टसम्पादनेन प्रीताः।

अग्निर्वा एष वैश्वानरः पञ्चमेनिर्यत् पुरोहितः। तस्य वाच्येवैका मेनिर्भवति, पादयोरेका, त्वच्येका, हृदय एका, उपस्थ एका। ताभिर्ज्वलन्तीभिर्दीप्यमानाभिरुपोदेति राजानम्। स यदाह क्व भगवोऽवात्सीस्तृणान्यस्मा आहरतेति तेनास्य तां शमयति यास्य वाचि मेनिर्भवति। यदस्मा उदकमानयन्ति पाद्यं तेनास्य तां शमयति यास्य पादयोर्मेनिर्भवति। अथ यदेनमलंकुर्वन्ति तेनास्य तां शमयति यास्य त्वचि मेनिर्भवति। अथ यदेनं तर्पयन्ति तेनास्य तां शमयति यास्य हृदये मेनिर्भवति। अथ यदस्यानारुद्धो वेश्मसु वसति तेनास्य तां शमयति यास्योपस्थे मेनिर्भवति। स एनं शान्ततनुरभिहुतोऽभिप्रीतः स्वर्गं लोकमभिवहति क्षत्रं च बलं च राष्ट्रं च विशं च। स एवैनमशान्ततनुरनभिहुतोऽनभिप्रीतः स्वर्गाल्लोकान्नुदते क्षत्राच्च बलाच्च राष्ट्राच्च विशश्च।

( ऐ० ब्रा० ८।२४ )

परोपद्रवकारिणी क्रोधरूपा शक्तिर्मेनिरित्युच्यते, यथाग्नेर्ज्वाला तद्वत्। अतो यः पुरोहितोऽस्ति सोऽयं पञ्चविधमेन्युपेतो वैश्वानरनामकाग्निसमानः, वागादीनि पञ्च मेनिस्थानानि चेति सायणः। उपोदेति समीपे प्राप्नोति। तृणानि कुशाद्यासनानि। अलंकुर्वन्ति वस्त्रगन्धादिना। तर्पयन्ति धनादिना।

क्षत्रेण क्षत्रं जयति बलेन बलमश्नुते। यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः ॥१॥

तस्मै विशः सञ्जानते सम्मुखा एकमनसः। यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः ॥२॥

( ऐ० ब्रा० ८।२५ )

यस्य राज्ञः। संजानते। राज्ञा सहैकमत्यं प्राप्नुवन्ति। संमुखाः। न विमुखा भवन्तीति भावः।

यो ह वै त्रीन् पुरोहितांस्त्रीन् पुरोधातॄन् वेद स ब्राह्मणः पुरोहितः। स वदेत पुरोधायै। अग्निर्वाव पुरोहितः पृथिवी पुरोधाता, वायुर्वाव पुरोहितोऽन्तरिक्षं पुरोधाता, आदित्यो वाव पुरोहितो द्यौः पुरोधाता। एष ह वै पुरोहितो य एवं वेद। अथ स तिरोहितो य एवं न वेद।

तस्य राजा मित्रं भवति द्विषन्तमप बाधते। यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः ॥

( ऐ० ब्रा० ८।२७ )

तस्य राज्ञः। राजा देशान्तरवर्ती।

न ह वा अपुरोहितस्य राज्ञो देवा अन्नमदन्ति। तस्माद्राजा यक्ष्यमाणो ब्राह्मणं पुरो दधीत देवा मेऽन्नमदन्निति।

( ऐ० ब्रा० ८।२४ )

बृहस्पतिर्ह वै देवानां पुरोहितस्तमन्वन्ये मनुष्यराज्ञां पुरोहिताः।

( ऐ० ब्रा० ८।२६ )

(ख) राजा राष्ट्रं च—

ऐन्द्रो वै देवतया क्षत्रियो भवति ( ऐ० ब्रा० ७।२३ )

ऐन्द्र इन्द्रसंबन्धी। देवतानां मध्ये इन्द्रः क्षत्रियस्याभिमानी देवतेत्यर्थः।

ओजः क्षत्रं वीर्यं राजन्यः ( ऐ० ब्रा० ८।४ )

क्षत्रं वा एष प्रपद्यते यो राष्ट्रं प्रपद्यते। क्षत्रं हि राष्ट्रम्।
( ऐ० ब्रा० ७।२२ )

क्षत्रायैव तद् विशं प्रत्युद्यामिनीं कुर्युः पापवस्यसम्
( ऐ० ब्रा० ६।२१ )

*प्रत्युद्यामिनीं प्रतिकूलोद्योगयुक्ताम्। पापवस्यसम्। तद्धि अतिशये पापरूपम्।*

न वा अनभ्युत्क्रुष्टः क्षत्रियो वीर्यं कर्तुमर्हति।
( ऐ० ब्रा० ८।१७ )

अनभ्युत्कृष्टो गुणकीर्तनादिद्वारा प्रजास्वनुद्घोषितः क्षत्रियो राज्येऽभिषिक्तो वीर्यं स्वपदानुरूपं न कर्तुमर्हतीत्यर्थः। ततश्च राज्ञा सर्वथा राष्ट्ररञ्जनं विधेयमिति भावः।

नितत इव हीह क्षत्रियो राष्ट्रे वसन् भवति। प्रतिष्ठित इव।
( ऐ० ब्रा० ७।३१ )

निततो नितरां सन्ततः। क्षत्रियो राजा।

यत्रेन्द्रं देवताः पर्यवृञ्जन् विश्वरूपं त्वाष्ट्रमभ्यमंस्त वृत्रमस्तृत यतीन् सालावृकेभ्यः प्रादादरुर्मघानवधीद् बृहस्पतेः प्रत्यवधीदिति तत्रेन्द्रः सोमपीथेन व्यार्ध्यत। इन्द्रस्यानु व्यृद्धिं क्षत्रं सोमपीथेन

व्यार्ध्यत ।......तद् व्यृद्धमेवाद्यापि क्षत्रं सोमपथेन ।

( ऐ० ब्रा० ७ २८ )

पर्यवृञ्जन् यज्ञेषु परितो वर्जितवन्तः । व्यार्ध्यत वियुक्तोऽभूत् । अभ्यमंस्त हिंसितवान् । अस्तृत हिंसितवान् । यतयो वेदविरुद्धनियमोपेता इति सायणः । सालावृका अरण्यश्वानः । स्वगुरोर्बृहस्पतेर्वाक्यं स्वकीयेन वाक्येन प्रत्यवधीत् । प्रतिघातमकरोत् । विश्वरूपवधादयो हि इन्द्रस्यापराधाः ।

राष्ट्राणि वै विशः । ( ऐ० ब्रा० ८।२६ )

( ग ) ब्रह्मक्षत्रयोः संबन्ध :—

न वै ब्रह्मण्वद्रिष्यति । ( ऐ० ब्रा० १।१३ )

न वै रिष्यति । सर्वथा नाशं न प्राप्नोति ।

ब्रह्म खलु वै क्षत्रात्पूर्वम् । ( ऐ० ब्रा० ८।१ )

ब्रह्म च क्षत्र च संश्रिते । ( ऐ० ब्रा० ३।११ )

संश्रिते । परस्पराश्रिते ।

ब्रह्मणि खलु वै क्षत्रं प्रतिष्ठितम् । क्षत्रे ब्रह्म । ( ऐ० ब्रा० ८।२ )

भूयान् वै ब्राह्मणः क्षत्रियात् । ( ऐ० ब्रा० ७।१५ )

यत्र वै ब्रह्मणः क्षत्रं वशमेति तद्राष्ट्रं समृद्धं तद्वीरवदा हास्मिन् वीरो जायते । ( ऐ० ब्रा० ८।६ )

( घ ) शत्रुजय :—

उपसदा वै महापुरं जयन्ति । ( ऐ० ब्रा० १।२३ )

उपसदा परकीयदुर्गसमीपावस्थानेन, महत्या सेनया दुर्गवेष्टनेन, महतीं दुर्गरूपां पुरम् ( सायणः )

न द्विषतः पूर्व उपविशेद्, यदि तिष्ठन्तं मन्येत तिष्ठेतैव, न द्विषतः पूर्वः संविशेत्, यद्यासीनं मन्येतासीतैव। न द्विषतः पूर्वः प्रसुप्याद्, यदि जाग्रतं मन्येत जाग्रियादेव। अपि ह यद्यस्याश्ममूर्धा द्विषन् भवति, क्षिप्रं हैवैनं स्तृणुते स्तृणुते।

( ऐ० ब्रा० ८।२८ )

अश्ममूर्धा पाषाणसदृशशिरस्कः। अतिप्रबल इत्यर्थः। स्तृणुते हिनस्ति। शत्रुविनाशाय राज्ञा सदा जागरूकेण स्थातव्यमिति रहस्यम्।

( ङ ) राज्यपद्धतेर्भेदाः :—

एतस्यां प्राच्यां दिशि ये के च प्राच्यानां राजानः साम्राज्यायैव तेऽभिषिच्यन्ते। सम्राळित्येनानभिषिक्तानाचक्षते।

( ऐ० ब्रा० ८।१४ )

एतस्यां दक्षिणस्यां दिशि ये के च सत्वतां राजानो भौज्यायैव तेऽभिषिच्यन्ते। भोजेत्येनानभिषिक्तानाचक्षते। ( ऐ० ब्रा० ८।१४ )

एतस्यां प्रतीच्यां दिशि ये के च नीच्यानां राजानो येऽपाच्यानां स्वाराज्यायैव तेऽभिषिच्यन्ते। स्वराळित्येनानभिषिक्तानाचक्षते। ( ऐ० ब्रा० ८।१४ )

निकर्षमञ्चन्तीति नीच्याः। अपकर्षमञ्चन्तीति अपाच्याः। जात्या निकर्षः, व्यवहारेणापकर्षः। ( सायणः )

एतस्यामुदीच्यां दिशि ये के च परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्रा इति वैराज्यायैव तेऽभिषिच्यन्ते। विराळित्येनानभिषिक्तानाचक्षते। ( ऐ० ब्रा० ८।१४ )

अस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां राजानः सवशोशीनराणां राज्यायैव तेऽभिषिच्यन्ते। राजेत्येनानभिषिक्तानाचक्षते। ( ऐ० ब्रा० ८।१४ )

मध्यमा दिक्। मध्यदेशः। ( सायणः )

## (११) लौकिका दृष्टान्ताः

तत्तदर्थस्पष्टीकरणाय दृष्टान्तानामुपयोगः प्रायेण सर्वशास्त्रेषु समादृतः। दृष्टान्तेषु हि लौकिकपरीक्षकाणां बुद्धिसाम्याज्झटित्येव तद्द्वारा गूढोऽप्यर्थो बुध्यारूढो भवति। अत एवात्रापि तत्तत्प्रसङ्गेन नैके दृष्टान्ताः प्रयुक्ता दृश्यन्ते। ते च न केवलं प्रकृतार्थोपयोगित्वेनैव किन्तु स्वार्थिकपदार्थमहिम्नापि विदुषा विमर्शयोग्या इत्यधस्तात्संगृह्यन्ते। तथाहि—

तद्यथा चैत्रज्ञमध्वनः पुरएतारं कुर्वीत तादृक् तत्।

( ऐ० ब्रा० ४।२० )

चैत्रज्ञं मार्गविशेषाभिज्ञम्। पुरएतारम्। पुरतो गन्तारं मार्गप्रदर्शकम्।

तद्यथा दीर्घाध्व उपविमोकं यायात् तादृक् तत्।

( ऐ० ब्रा० ६।२३ )

लोके यथा दूरमार्गे गच्छन् पुरुषो रथादौ योजितमश्वादिकं श्रान्तिपरिहाराय तत्र तत्र उपविमुच्योपविमुच्य गच्छेत् तथेति भावः।

तद्यथादोऽश्वान् वा गा वा पुनरभ्याकारं तर्पयन्त्येवमेवैतद्देवताः पुनरभ्याकारं तर्पयन्ति। ( ऐ० ब्रा० ३।५ )

पुनरभ्याकारम् पौनःपुन्येन तृणोदकादिभिरभिमुखीकृत्य (सायणः)

तद्यथादोऽश्वैर्वानळुद्भिर्वान्यैरन्यैरश्रान्ततरैरश्रान्ततरैरुपविमोकं यान्ति। एवमेव......( ऐ० ब्रा० ४।२७ )

उपविमोकम्। श्रान्तानश्वान् उपविमुच्योपविमुच्य। अन्यैरन्यैः। पुनः पुनर्नूतनैः।

तद्यथा पुनराग्रन्थं पुनर्निर्ग्रन्थमन्त बध्नीयात्, मयूखं वान्ततो धारणाय निहन्यात् तादृक् तत्। ( ऐ० ब्रा० ५।१५ )

शस्त्रस्य स्रंसनपरिहारार्थमत्र दृष्टान्तद्वयम्। तद्यथा लोके रज्जुं निर्मिमाणः पुरुषः 'पुनराग्रन्थं' पुनः पुनराग्रथ्य आग्रथ्य 'पुनर्निर्मन्थं' पुनः पुनर्निर्ग्रथ्य निर्ग्रथ्य तस्या रज्जोरन्तं बध्नीयात्। दीर्घाया रज्ज्वा अग्रं सूक्ष्मं पुनः पृष्ठतः प्रत्याकृष्य वेष्टनं कृत्वा ग्रथनं नाम। तस्य दृढीभावो निर्ग्रथनम्। यथा वा लोके चर्मकार आर्द्रस्य चर्मणः संकोचनिवारणाय भूमौ तत्प्रसार्य दृढमाकृष्य चर्मणोऽन्ते 'मयूखं' शङ्कुं चर्मणो धारणाय भूमौ निहन्यात्। एवम्... ..... ...

तद्यथाभिहेषते पिपासते क्षिप्रं प्रयच्छेत्तादृक् तत्।

( ऐ० ब्रा० ६।८ )

प्रयच्छेत्। पानीयादिकमिति शेषः।

तद्यथा समुद्रं प्रस्रवेरन्नेवं हैव ते प्रस्रवन्ते ये,......

( ऐ० ब्रा० ६।२१ )

प्रस्रवः परतोऽवगमनम् ( सायणः )

तद्यथा सूच्या वासः सन्दधदियात्। ( ऐ० ब्रा० ३।१८ )

तद्यथा सैरावतीं नावं पारकामाः समारोहेयुरेवमेव......

( ऐ० ब्रा० ६।२१ )

सैरावती नावम्। इरा अन्नम्। तत्समूह ऐरम्। तेन सह वर्तत इति सैरं नौस्थं वस्तुजातम्। तादृशं सैरं यस्यां नाव्यस्ति, सेयं नौः सैरावती (सायणः)। मार्गेऽपेक्षितवस्तुजातेन सहिता नौरित्यर्थः।

तद्यथेह चेह चापथेन चरित्वा पन्थानं पर्यवेयात्तादृक् तत्।
(ऐ० आ० ४।४)

पन्थानम्। समीचीनं पन्थानम्। पर्यवेयात् परिगच्छेत्।

- तद्यथैवाद इति ह स्माह तेजन्या उभयतोऽन्तयोरप्रस्रंसाय वसौं नह्यति, एवमेवैतद्।
(ऐ० आ० १।११)

तेजनिः रज्जुः। अप्रस्रंसाय विश्लेषनिवारणाय। वसौं नह्यति। मल्लाकारौ ग्रन्थी बध्नाति। (सायणः)

यथ ऋषभो वाशितां यथा वा गौः प्रज्ञातं गोष्ठमेवं (हैवा-मिन्द्रो यज्ञमेव गच्छति)।
(ऐ० आ० ६।२२)

वाशितां गर्भार्थिनीं गाम्। यज्ञमागच्छत्येवेत्यन्वयः।

यथा कुमाराय वा वत्साय वा जाताय स्तनं प्रतिदध्यात् तादृक् तत्। (ऐ० आ० ५।३१)

प्रतिदध्यात्। पातुं समर्पयेत्।

यथा कुमाराय वा वत्साय वाऽजाताय स्तनं प्रतिदध्यात्तादृक् तत्। (ऐ० आ० ५।३१)

अजाताय। अनुत्पन्नाय।

यथा गृहानितं कर्मणाऽनुसमियात, एवमेव......
(ऐ० आ २।३१)

यथा गृहप्राप्तमतिथिमातिथ्यसत्कारेणोपचरेदेवमित्यर्थः।

यथा पुरुषाय वा हस्तिने वाऽप्रयते हस्त आदध्यात्तादृक् तत्।......यथा पुरुषाय वा हस्तिने वा प्रयते हस्त आदध्यात्तादृक् तत् ( ऐ० ब्रा० ५।३१ )

अप्रयते अप्रसारितहस्ते ग्रासम् आदध्यात् प्रक्षिपेत्।

यथा रथचक्रमनन्तमेवं यदग्निष्टोमः।...तदेषाभियज्ञगाथा गीयते। यदस्य पूर्वमपरं तदस्य यद्वस्यापरं तद्वस्य पूर्वम्। अहेरिव सर्पणं शाकलस्य न विजानन्ति यतरत्परस्तादिति।

( ऐ० ब्रा० ३।४३ )

यथा रथचक्रस्य पुनः पुनः परिवर्तमानस्य अयमादिरयमन्त इति विभागः कर्तुं न शक्यते तथेति भावः। शाकलशब्दः सर्पविशेषवाची। स हि सर्पणकाले मुखेन पुच्छस्य दंशनं कृत्वा वलयाकारो भवति। तत्र किं मुखं किं पुच्छमिति न ज्ञायते।

यथा श्रान्तोऽविमुच्यमान उत्कृत्येत। एवं......

( ऐ० ब्रा० ६।२३ )

यथा लोके रथादौ युक्तोऽश्वादिर्दूरगमनाच्छ्रान्तः सन् यदि न विमुच्येत, तदानीमुत्कृत्येत उच्छिद्येत ( सायणः )।

यथाश्वो वाश्वतरो वोहिवांस्तिष्ठेदेवम्......( ऐ० ब्रा० ३।४७ )

ऊहिवान्। भारवहनं कृत्वा श्रान्तः सन्।

यथैकतश्चक्रेण यायात्तादृक् तत्......यथोभयतश्चक्रेण यान् क्षिप्रमध्वानं समश्नुवीत तादृक् तत्।

( ऐ० ब्रा० ५।३० )

यथैकपात् पुरुषो यन्नेकतश्चक्रो वा रथो वर्तमानो भ्रेषं न्येति एवमेव......यथोभयतःपात्पुरुषो यन्नुभयतश्चक्रो वा रथो वर्त्तमानो न रिष्यति। एवमेव.. ...( ऐ० ब्रा० ५।३३ )

भ्रेषं भूमौ पतनं न्येति नितरामेति। रिष्यति विनश्यति।

यथैव गत्वा काष्ठामपराध्नुयात् तादृक् तत्। ( ऐ० ब्रा० ४।६ )

काष्ठामवधिम् धावनसमाप्तिम्। अपराध्नुयात्। स्खलनपतनादिरूपमपराधं कुर्यात्।

यथैव गत्वा काष्ठामभिपद्येत तादृक् तत्। ( ऐ० ब्रा० ४.६ )

अभिपद्येत। स्खलनरहितः स्वाभीष्टं प्राप्नुयात्।

यथैव छिन्ना नौर्बन्धनात्तीरं तीरमृच्छन्ती सर्वैतवमेव ते...
( ऐ० ब्रा० ४।१३ )

तीरं तीरं परतीरमर्वाक् तीरं च। अनेन यत्र कुत्रापि गच्छेत्।

यथैव प्रवयणतः पेशः कुर्यात्तादृक् तत्।......यथैव मध्यतः पेशः कुर्यात्तादृक् तत्।......यथैवात्र प्रज्ञनतः पेशः कुर्यात्तादृक् तत्। ( ऐ० ब्रा० ३।१० )

पेशः अलङ्काराः। वेञ् तन्तुसन्ताने इति धातोर्वयशब्दोत्पत्तिः। कुविन्दानां यत्प्रारम्भे वस्त्रवयनं तत् प्रवयणम्। लोके यथैव वाससा प्रवयणतः वयनप्रारम्भे पेशोऽलंकारं कुर्यात्। यर्णान्तरोपेतैस्तन्तुभिरलंकारः, तथैव। प्रज्ञनः वस्त्रस्यान्तभागः। ( सायणः )

## (१२) यज्ञस्य महिमा स्वरूपञ्च तथार्त्विज्यम्

यज्ञस्य महिम्नः स्वरूपस्य च वर्णनमत्र नैकप्रकारेण कृतं नूनं चेतश्चमत्करोति। यज्ञो वै स्वर्गगमनाय देवरथसदृशः, स्वाभीष्टावाप्तये च

सुतर्मा नौरिव, तस्य श्रेयमनु यजमानो श्रेयमेतीत्येवं बहुधा तस्य महिमा हृदयंगमविधया वर्णितो दृश्यते। यज्ञस्वरूपविषयेऽपि भावनायज्ञविधिः, दधियवाग्वादिहोमद्रव्यालाभे 'अहं श्रद्धां जुहोमि' इत्येवं संकल्प्य श्रद्धाया एव होमोऽनुष्ठातुं शक्यते, 'मनसैव यज्ञस्तायते' इत्यादिप्रकारेण यज्ञानुष्ठाने मनःशक्तेरद्भुतं सामर्थ्यम्, क्रियमाणकर्मणोऽभिव्यञ्जिकाया एव ऋचः प्रयोगो यज्ञसमृद्धिकरः, यज्ञे दीक्षितस्य नूतनमिव जन्म जायते, पुरोडाशसत्रस्य प्रशंसा—इत्यादयो विषयाः प्रपञ्चिताः। एवमृत्विजां प्रशंसा, तत्कर्तव्यम्, यज्ञे वर्ज्यो ऋत्विजश्चेत्येते विषया अत्र यज्ञमधिकृत्य निरूपिताः श्रूयन्ते। तथा हि—

(क) यज्ञस्य महिमा—

ते देवा एवं क्लृप्तेन यज्ञेनापासुरान् पाप्मानमघ्नताजयन् स्वर्गं लोकम्। 'अप ह वै द्विषन्तं पाप्मानं भ्रातृव्यं हते जयति स्वर्गं लोकं य एवं वेद। (ऐ० ब्रा० ६।४)

देवरथो वा एष यद्यज्ञः। (ऐ० ब्रा० २।३७)

तस्मादाहुर्जुह्वदेवाजुह्वतो वसीयानिति। (ऐ० ब्रा० ३।३६)

होमरहितात्पुरुषाद् होमं कुर्वन्नेवात्यन्तं श्रेष्ठ इत्येवं जना आहुरित्यर्थः।

न ह वा अग्निष्टोमः क्षमा रमते। ऊर्ध्वो ह वा एष यजमानमादाय स्वरेति।...तं यथा समुद्रं स्रोत्या एवं सर्वे यज्ञक्रतवोऽपियन्ति। (ऐ० ब्रा० ३।३६)

क्षमा क्षमायां भूमौ। स्रोत्या नद्यः। तमग्निष्टोमम्।

पथो वा एष प्रैति यो यज्ञे मुह्यति। (ऐ० ब्रा० ३।११)

पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्ति।
( ऐ० ब्रा० १।३ )

गर्भं कुर्वन्ति। गर्भवदसौ संस्कारैः पालनीय इत्यर्थः ( सायणः)

प्रजापतिर्यज्ञमसृजत। यज्ञं सृष्टमनु ब्रह्मक्षत्रे असृज्येताम्। ब्रह्मक्षत्रे अनु द्वय्यः प्रजा असृज्यन्त हुतादश्चाहुतादश्च। ब्रह्मैवानु हुतादः, क्षत्रमन्वहुतादः। एता वै प्रजा हुतादो यद् ब्राह्मणाः, अथैता अहुतादो यद्राजन्यो वैश्यः शूद्रः। ( ऐ० ब्रा० ७।१९)

प्राणान्वा एषोऽभ्यात्मन् धत्ते योऽग्नीनाधत्ते।
( ऐ० ब्रा० ७।१२ )

ब्रह्म वा एष प्रपद्यते यो यज्ञं प्रपद्यते। ब्रह्म वै यज्ञः।
(ऐ० ब्रा० ७।२२ )

यजमानो वै यज्ञः। ( ऐ० ब्रा० १।२८ )

यज्ञस्य भ्रेषमनु यजमानो भ्रेषं न्येति। ( ऐ० ब्रा० ५।३३ )

यज्ञस्य वै छिद्रं स्रवद् यजमानोऽनु पापीयान् भवति।
( ऐ० ब्रा० ३।११ )

यज्ञस्यारिष्टिमनु यजमानो न रिष्यति। ( ऐ० ब्रा० ५।३३ )

अरिष्टि विनाशाभावम्।

यज्ञियं वै कर्मोक्थ्यं वचः। ( ऐ० ब्रा० १।२६ )

यज्ञेन वै देवा ऊर्ध्वाः स्वर्गं लोकमायन्। ( ऐ० ब्रा० २।१ )

यज्ञो वै सुतर्मा नौः। ( ऐ० ब्रा० १।१३ )

यज्ञरूपां नावमारुह्य स्वर्गलोकमभिसंतरतीत्यर्थः।

यादृगिव वै देवेभ्यः करोति तादृगिवास्मै देवाः कुर्वन्ति।
( ऐ० ब्रा० ३।९ )

वृत्रं वा एष हन्ति यं यज्ञ उपनमति। (ऐ० ब्रा० १।४)

वृत्रं पापरूपं शत्रुमिति सायणः। यं यज्ञ उपनमति। यो यज्ञं सम्पादयतीत्यर्थः।

स वा एष एकातिथिः। स एष जुह्वत्सु वसति।...एतां वाव सं देवतामपरुणद्धि योऽलमग्निहोत्राय सन्नाग्निहोत्रं जुहोति। तमेषा देवतापरुद्धापरुणध्यस्मांश्च लोकादमुष्माच्चोभाभ्यां योऽलमग्निहोत्राय सन्नाग्निहोत्रं जुहोति। 'तस्माद्योऽलमग्निहोत्राय स्याज्जुहुयात्। (ऐ० ब्रा० ५।३०)

एष आदित्यः। अपरुणद्धि निराकरोति। अलं समर्थः।

सर्वाभिर्वा एष देवताभिरालब्धो भवति यो दीक्षितो भवति। (ऐ० ब्रा० २।६)

आलब्धः स्वीकृतः। (सायणः)

सर्वाभ्यो वा एष देवताभ्य आत्मानमालभते यो दीक्षते। (ऐ० ब्रा० २।३)

आत्मानमालभते। पशुत्वेनालब्धुमुपक्रमते। (सायणः)

सैषा स्वर्ग्याहुतिर्यदग्न्याहुतिः। यदि ह वा अप्यब्राह्मणोक्तो यदि दुरुक्तोक्तो यजतेऽथ हैषाहुतिर्गच्छत्येव देवान्न पाप्मना संसृज्यते। (ऐ० ब्रा० १।१६)

अब्राह्मणोक्तः। "ब्राह्मणं विधायकं वाक्यं, तेन प्रेरितो ब्राह्मणोक्तः। तद्विपरीतः पण्डितम्मन्यः स्वबुद्ध्यैव यत् किञ्चिद् योऽनुतिष्ठति, सोऽयमब्राह्मणोक्तः।...अथवा स्मृतिषु अब्राह्मणत्वेन प्रतिपादितो योऽस्ति,

सोऽयमब्राह्मणोक्तः" इति सायणः । अन्ये तु अब्राह्मणत्वेनोक्तः, वस्तुतोऽब्राह्मणा इति यावत् ।

दुरुक्तोक्तः । "पौरुषेयार्थविरुद्धं विधिवाक्यं दुरुक्तं तेन प्रेरितो दुरुक्तोक्तः ।.. ( अथवा ) दुष्टान्यपवादरूपाणि वचानानि दुरुक्तानि, तैरभिशस्तो दुरुक्तोक्तः" इति सायणः ।

( ख ) यशस्स्वरूपविषये—

ऐन्द्रो वै यज्ञः । इन्द्रो यज्ञस्य देवता । ( ऐ० ब्रा० ५।३४ )

यज्ञः सोमयाग इति सायणः ।

स प्रजापतिर्यज्ञमतनुत । तमाहरत् । तेनायजत ।.........
स प्रजापतिर्यज्ञं देवेभ्यः सम्प्रायच्छत् । ते देवा यज्ञमतन्वन्त । तमाहरन्त । तेनायजन्त । ( ऐ० ब्रा० ५।३२ )

असौ वा आदित्यो यूपः पृथिवी वेदिरोषधयो बर्हिर्वनस्पतय इध्मा आपः प्रोक्षण्यो दिशः परिधयो यद्ध वा अस्य किञ्च नश्यति यन् म्रियते यदपाजन्ति सर्वं हैवैनं तदमुष्मिंल्लोके यथा बर्हिषि दक्षमागच्छेदेवमागच्छति य एवं विद्वानग्निहोत्रं जुहोति । उभयान्वा एष देवमनुष्यान् विपर्यासं दक्षिणा नयति सर्वं चेदं यदिदं किञ्च । मनुष्यान्वा एष सायमाहुत्या देवेभ्यो दक्षिणा नयति, सर्वं चेदं यदिदं किञ्च । त एते प्रलीना न्योकस इव शेरे मनुष्या देवेभ्यो दक्षिणा नीताः । देवान्वा एष प्रातराहुत्या मनुष्येभ्यो दक्षिणा नयति, सर्वं चेदं यदिदं किञ्च । त एते विविदाना इवोत्पतन्त्यदोऽहं करिष्येऽदोऽहं गमिष्यामीति वदन्तः ।

यावन्तं ह वै सर्वमिदं दत्त्वा लोकं जयति तावन्तं ह लोकं जयति य एवं विद्वानग्निहोत्रं जुहोति।

( ऐ० आ० ५।२८ )

भावनारूपो होमोऽत्र विधीयते। अस्य भावनारूपं यज्ञं कुर्वतः। अत्र आदित्यादिषु यूपादिभावनेवाग्निहोत्रहोमः। स चेतरसंपत्त्यभावे कर्तव्यत्वेनात्र विधीयते। यदपाजन्ति। अपगच्छति स्वस्माद्वियुक्तं भवति। विपर्यासं दक्षिणा नयति। विपर्यस्य दक्षिणाः कृत्वा समर्पयति। न्योकस इव। ओकः स्थानम्। मदीयं गृहमित्यभिमानरहिता एव। शेरे शेरते।

आ त्वैव श्रद्धायै होतव्यम्। ( ऐ० आ० ५।२७ )

दध्यपकाभ्वादि यदि किमपि होमद्रव्यं न लभ्येत तर्हि "श्रद्धां जुहोमि" इति संकल्प्य श्रद्धाया एव होमो विधेय इत्यर्थः। (तु० सायणः)

श्रद्धा पत्नी सत्यं यजमानः। श्रद्धा सत्यं तदित्युत्तमं मिथुनम्। श्रद्धया सत्येन मिथुनेन स्वर्गान् लोकाञ्जयतीति ( ऐ० आ० ७।१० )

मानसमग्निहोत्रं कीदृशमिति प्रसङ्गेनेदं वचनम्।

तद्यथायथमृत्विज ऋतुयाजान् यजन्त्यसंप्रदायम्। तद् यथर्तूनृतून् कल्पयन्ति, यथायथं जनताः। ( ऐ० आ० ५।६ )

यथायथमृत्विग्भिर् ऋतुयाजाना यजनेन ऋतवः सुखप्रदा जनसमूहश्च सुखी संजायत इति भावः। असंप्रदायम्। स्वकर्तव्यमनतिक्रम्य।

तस्माद्धाप्येतर्हि यज्ञः सयुग्भूत्वा देवेभ्यो हव्यं वहति ब्राह्मणेन च च्छन्दोभिश्च। ( ऐ० आ० ३।४५ )

पङ्क्तो वै देवा यज्ञं समभरन् ( ऐ० आ० ३।११ )

पञ्चः पादशः, एकैकभागक्रमेण। समभवन् सपादितवन्तः।।

दीक्षमाणेषु पूर्वः पूर्व एव दिदीक्षिषेत। अप पाप्मानं हते य एवं वेद। (ऐ० ब्रा० ४।२५)

मनसा वै यज्ञस्तायते मनसा क्रियते। (ऐ० ब्रा० ३।११)

येन तमसा प्रावृतो मन्येत तन्मनसा गच्छेदप हैवास्मात्तल्लुप्यते। (ऐ० ब्रा० ३।१६)

गच्छेत्। ध्यायेत्। तमो हि बहुविधम्—दृष्टिनिरोधकमेकम्, मोहरूपं द्वितीयम्, पापरूपं तृतीयम्। यज्ञप्रसङ्गेनैव एतदुच्यते।

एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति। (ऐ० ब्रा० १।४)

रूपसमृद्धमित्यस्यैव व्याख्यान 'यत्कर्म क्रियमाणमृगभिवदति' इति।

यद्यज्ञेऽभिरूप तत्समृद्धम्। (ऐ० ब्रा० १।१६)

अभिरूपम्। प्रकृतकर्मण ऋचाप्यभिधीयमानत्वेनानुरूपम्।

यजमान ह वा एतेन सर्वेण यज्ञक्रतुना संस्कुर्वन्ति। स यथा गर्भो योन्यामन्तरेवं संभवञ्छेते। न वै सकृदेवाग्रे सर्वः संभवत्येकैक वा अङ्ग संभवतः समवतीति।

(ऐ० ब्रा० ६।३१)

शेतेऽवतिष्ठते। यज्ञक्रतुना यजमानस्य संस्कृतिः शनैः शनैर्जायमाना कालसाध्यैवेति भावः।

यज्ञाद्वु ह वा एष पुनर्जायते यो दीक्षते। (ऐ० ब्रा० ७।२२)

यज्ञो यज्ञस्य प्रायश्चित्तिः। (ऐ० ब्रा० ७।४)

यत्र क च यजमानवशो भवति, कल्पत एव यज्ञोऽपि। तस्यै जनतायै कल्पते यत्रैव विद्वान् यजमानो वशी यजते।
( ऐ० ब्रा० ३।१३ )

कल्पते प्रयोजनसमर्थो भवति। वशी स्ववशो भूत्वा।

एते वै यज्ञस्यान्त्ये तन्वौ यदग्निश्च विष्णुश्च। (ऐ० ब्रा० १।१)

अन्त्ये। आदावन्ते च वर्तमाने।

तदाहुः ......ऋतेरक्षा वै यज्ञः। ( ऐ० ब्रा० २।७ )

ऋतेशब्दो वर्जनवाची। वर्जितं रक्षो यस्मिन्यज्ञे सोऽयम् ऋतेरक्षाः। तदाहुः केचिदाहुरित्यर्थः।

कुलायमिव ह्येतद् यज्ञे क्रियते यत्पैतुदारवाः परिधयो गुग्गुलूर्णास्तुकाः सुगन्धितेजनानीति। ( ऐ० ब्रा० १।२८ )

कुलायमिव नीडमिव। पितुदारुः खदिरवृक्ष इत्येके, देवदारुवृक्ष इत्यन्ये, तत्संबन्धिनः पैतुदारवाः। ऊर्णास्तुका अविसंबन्धिरोमविशेषाः। सुगन्धितेजनं तृणविशेषः। एते उत्तरवेद्यां स्थापिताः संभाराः।

तदाहुर्न यज्ञे रक्षसां कीर्तयेत्। ( ऐ० ब्रा २।७ )

तदाहुः। केचिदाहुरित्यर्थः।

चक्षुर्वा एतद् यज्ञस्य यत्तूष्णींशंसः। ( ऐ० ब्रा० २।३२ )

तूष्णींशंसः तूष्णीं शंसनम्।

तूष्णींसारो वा एष यत्तूष्णींशंसः। ( ऐ० ब्रा० २।३१ )

मूलं वा एतद् यज्ञस्य यत्तूष्णींशंसः। ( ऐ० ब्रा० २।३२ )

तदाहुर्यदेष हविरेव यत्पशुः। अथास्य वह्वपैति लोमानि त्वगसृक्कुष्ठिकाः शफा विषाणे स्कन्दति पिशितम्। केनास्य

तदापूयत इति। यदेवैतत् पशौ पुरोडाशमनुनिर्वपन्ति तेनैवास्य तदापूर्यते। पशुभ्यो वै मेधा उदक्रामंस्तौ व्रीहिश्चैव यवश्च भूता (मा) वजायेताम्। ( ऐ० ब्रा० २।११ )

अस्मक्रम्। कुष्ठिका उदरवर्त्तिनो भक्षितास्तृणादयः। विग्रितं मासं यत्किञ्चित् स्कन्दति भूमौ पतति। मेधाः यज्ञयोग्या भागाः। कृत्स्नस्यैव पशोर्हविरूपत्वस्वीकारात्तस्य चावयवानामपगमे कथं तेषा पूर्त्तिरिति प्रश्ने पशुपुरोडाशेनैव तेषा पूर्त्तिर्भवतीति वेदितव्यमित्यत्र पशुपुरोडाशप्रशंसैवाभिप्रेता।

सर्वेषां वा एष पशूना मेधेन यजते यः पुरोडाशेन यजते। तस्मादाहुः पुरोडाशसत्रं लोक्यमिति। ( ऐ० ब्रा० २।९ )

लोक्यम् प्रेक्षणीयम् ( सायणः )।

स वा एष पशुरेवालभ्यते यत्पुरोडाशः। तस्य यानि किशारूणि तानि रोमाणि, ये तुषाः सा त्वग्, ये फलीकरणास्तदसृग्, यत्पिष्टं किक्नसास्तन्मांसं, यत् किञ्चित्कं सारं तदस्थि।

( ऐ० ब्रा० २।९ )

किशारूणि बुसपलालादीनि। फलीकरणास्तण्डुलशैत्यार्थेनावघातेन हेया अंशाः। किक्नसाः सूक्ष्माः पिष्टावयवाः। किञ्चित्कम्। किञ्चिदपरम्। स्वार्थे कः प्रत्ययः।

सा वा एषामृताहुतिरेव यदपाहुतिः। अमृताहुतिरग्न्याहुतिः। अमृताहुतिराज्याहुतिः। अमृताहुतिः सोमाहुतिः। एता वा अशरीरा आहुतयः। या वै काश्चाशरीरा आहुतयोऽमृतत्वमेव ताभिर्यजमानो जयति। ( ऐ० ब्रा० २।१४ )

तस्मादाहुर्न निवृत्तदक्षिणां प्रतिगृह्णीयान्नेन्मा शुचा विद्धा ! विध्यादिति । यदि त्वेनां प्रतिगृह्णीयादप्रियायैनां भ्रातृव्याय दद्य परा हैव भवति । ( ऐ० ब्रा० ६।३५ )

निवृत्तदक्षिणां केनापि कारणेन परित्यक्ता दक्षिणाम् ।

तस्माद् दद्याज्ज्यः । .. ...तस्मात्प्रतिगृह्णता याज्यम् । च राध्नुवन्ति य एव विद्वांसो यजन्ते च याजयन्ति च ।

( ऐ० ब्रा० ४।२५

दक्षिणा वै यज्ञानां पुरोगवी । यथा ह वा इदमनोऽपुरोग रिष्यत्येवं हैव यज्ञोऽदक्षिणो रिष्यति । तस्मादाहुर्दातव्यैव ः दक्षिणा भवत्यल्पिकापि । ( ऐ० ब्रा० ६।३५ )

अनोऽपुरोगवम् । बलीवर्दरहितं शकटम् । रिष्यति विनश्यति

एते ह वै संवत्सरस्य चक्रे यदहोरात्रे ताभ्यामेव तत्संवत्सरमे स योऽनुदिते जुहोति यथैकतश्चक्रेण यायात्तादृक् तत् । य उदिते जुहोति यथोभयतश्चक्रेण यान् क्षिप्रमध्वानं समश्नुव तादृक् तत् ।......तदेषाभि यज्ञगाथा गीयते—यथा ह वास्थूरि केन यायादकृत्वान्यदुपयोजनाय । एवं यन्ति ते बहवो जना पुरोदयाज्जुह्वति येऽग्निहोत्रम् । इति ।

( ऐ० ब्रा० ५।३०

'अस्थूरि' नामाश्वो रथवाजी । यथा कश्चिन्मन्दबुद्धिः 'उपयोजन रथे योजयितुम् 'अन्यदकृत्वा' अश्वान्तरमसम्पाद्य एकेनैव 'अस्थूरि अश्वेन रथयुक्तेन यायात् । तद्वदेव तेषामाचरणं ये रात्रिरूपे एकस्मि न्नेव कालेऽग्निहोत्रं जुह्वतीत्यर्थः ।

(ग) ऋत्विजां प्रशंसा—

ईश्वरो ह यद्यप्यन्यो यजेताथ होतारं यशोऽर्तोः ।

( ऐ० ब्रा० २।२० )

यद्यपि यजमान एव यागकर्तृत्वं विद्यते तथापि होतुर्यशःप्राप्तिस्तु भवत्येवेति भावः । यशोऽर्तोरीश्वरो ह यशः प्राप्तुं समर्थमेव ।

ऋत्विजि हि सर्वो यज्ञः प्रतिष्ठितो यज्ञे यजमानः ।

( ऐ० ब्रा० २।३२ )

किं स यजमानस्य पापभद्रमाद्रियेतेति ह स्माह योऽस्य होता स्यादिति । अत्रैवैनं यथा कामयेत तथा कुर्यात् । (ऐ० ब्रा० ३।३)

यजमानस्य होता किमिष्टमनिष्टं वा सम्पादयितुं समर्थ इति प्रश्ने, अत्रैव जन्मनि एनं यजमानं प्रति होता यथा कामयेत तथा कर्तुं शक्नोतीत्युत्तरम् ।

तस्माद्धाप्येतर्हि यज्ञो ब्रह्मण्येव ब्राह्मणेषु प्रतिष्ठितः । ...तस्माद्धाप्येतर्हि क्षत्रियो यजमानो निधायैव स्वान्यायुधानि ब्रह्मण एवायुधैर्ब्राह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तते ।

( ऐ० ब्रा० ७।१९ )

एतर्हि एतस्मिन् काले । स्फ्यादीनि यज्ञायुधान्येव ब्रह्मण आयुधानि उच्यन्ते । अश्वयुक्तरथादीनि क्षत्रियस्यायुधानि ।

ब्रह्मणि हि सर्वो यज्ञः प्रतिष्ठितः । यज्ञे यजमानः ।

( ऐ० ब्रा० ७।२६ )

यज्ञस्य हैव भिषग् यद् ब्रह्मा । ( ऐ० ब्रा० ५।३४ )

(घ) वर्ज्या ऋत्विजः, ऋत्विजां कर्तव्यं च—

त्रीणि ह वै यज्ञे क्रियन्ते जग्धं गीर्णं वान्तम्। तद्धैतदेव जग्धं यदाशंसमानमार्त्विज्यं कारयत उत वा मे दद्यादुत वा मा वृणीतेति। यद्ध तत्पराङेव यथा जग्धम्। न हैव तद्यजमानं भुनक्ति। अथ हैतदेव गीर्णं यद् बिभ्यदार्त्विज्यं कारयत उत वा मा न बाधेतोत वा मे न यज्ञवेशसं कुर्यादिति। तद्ध तत्पराङेव यथा गीर्णम्। न हैव तद्यजमानं भुनक्ति। अथ हैतदेव वान्तं यदभिशस्यमानमार्त्विज्यं कारयते यथा ह वा इदं वान्तान्मनुष्या बीभत्सन्त एवं तस्माद्देवाः। तद्ध तत्पराङेव यथा वान्तम्। न हैव तद्यजमानं भुनक्ति। स एतेषां त्रयाणामाशां नेयात्। ( ऐ० ब्रा० ३।४६ )

यज्ञे वर्ज्यानृत्विजो दर्शयितुमेष प्रबन्धः। जग्धं भक्षितावशिष्टम् भोजनपात्रे स्थितम्। गीर्णमुदरे प्रविष्टम्। पराङ् निकृष्टम्। भुनक्ति पालयति। कश्चिदृत्विग् धनार्जनलम्पटः सन् निरन्तरमार्त्विज्यं कामयते। तादृशं कामयमानं पुरुषं यजमान आर्त्विज्यं कारयत इति यदस्ति तदेव 'जग्धम्'। यथा लोके पात्रस्थितं भक्षितावशिष्टमुच्छिष्टत्वादितरैरस्पृश्यं तथा।

यज्ञवेशसं यज्ञविघातम्। भीतिमात्रप्रयुक्तमार्त्विज्यं गीर्णमन्नमिव भोगयोग्यं न भवति। अभिशस्यमानो यः पातित्यापवादेन सर्वैर्निन्द्यते।

यथा ह वा इदं निषादा वा सेलगा वा पापकृतो वा वित्तवन्तं पुरुषमरण्ये गृहीत्वा कर्तमन्वस्य वित्तमादाय द्रवन्त्येवमेव त ऋत्विजो यजमानं कर्तमन्वस्य वित्तमादाय द्रवन्ति यमनेवंविदो याजयन्ति। ( ऐ० ब्रा० ८।११ )

सेळगाश्चौराः । इळा अन्न, तया सह वर्तन्त इति सेळा धनिकाः, तान् धनापहारार्थं गच्छन्तीति चौराः सेळगाः । कर्त्तमन्वस्य गर्ते प्रक्षिप्य । अनेवंविदस्तत्तयज्ञे विहितप्रक्रियाया अनभिज्ञाः ।

यशसा वा एषोऽभ्यैति य आर्त्विज्येन । तं यः प्रतिरुन्धेद् यशः स प्रतिरुन्धेद् । ..यदि त्वस्मादपोज्जिगांसेद् यज्ञेनास्माद-पोदियात । यदि त्वयाज्यः, स्वयमपोदितं तस्मात ।

( ऐ० ब्रा० ६।३४ )

आर्त्विज्य हि अत्यर्तं यशस्करम् । आर्त्विज्यकरणाय प्रार्थयितारं यजमानं यदि कश्चित्प्रार्थितः प्रतिरुन्धेत् तर्हि स स्वकीयं यश एव विनाशयेत् । ततश्चार्त्विज्यमङ्गीकरणीयमेवेति भावः।...परं यदि अस्माद् आर्त्विज्यात् । अपोज्जिगांसेत् अपेत्योद्गन्तुमिच्छेत् । तदानीमन्येन यज्ञेन निमित्तभूतेन अस्मादार्त्विज्यादपक्रम्योद्गच्छेत् । एकस्मिन्नेव दिने द्वयोर्यज्ञयोरनुष्ठानासंभवादित्यर्थः । परं यागार्थी पुरुषो यदि अयाज्यस्तदा तु आर्त्विज्यं स्वयमेवापोदितं भवति ।

## (१३) देवानां सामान्येन, तत्तद्देवानां, पितॄणां, गन्धर्वाणां, रक्षसां, देवासुराणां, स्वर्गादिलोकानां च वर्णनम् ।

प्राधान्येन यज्ञस्वरूपप्रतिपादनपरेषु ब्राह्मणेषु देवानां सामान्येन, तत्तद्देवानामग्न्यादीनां, पितॄणां, गन्धर्वाणां, प्रसङ्गेनासुराणां रक्षसां च वर्णनं स्वाभाविकमेव । अत एवास्मैतरेयब्राह्मणेऽपि तदुपलभ्यते । तत्र देवानां सामान्येन वर्णने तेषां मर्यादितत्त्वम्, कथं तेषां स्वर्गावाप्तिरभूत्, न वै देवा अन्योन्यस्य गृहे वसन्ति ( अर्थात् नैव ते स्वाधिकारमतिक्रम्य

वर्तन्ते ) इत्यादि विशदं प्रतिपाद्यते। तत्तद्देवानां वर्णनमपि सुचारु चर्चितम्। तद्यथा—अग्निं हीमाः प्रजाः परिक्षियन्ति, अग्नेर्वा एताः सर्वास्तन्वो यद्देवा देवताः, उद्यन्वा आदित्यः सर्वाणि भूतानि चेष्टयति, सर्वमिदमादित्यस्यानुचरस्थानीयमत एव तमनुचरति, सविता वै प्रसवानामीशे, प्रजापतेर्द्वादश तन्वः, संवत्सरः प्रजापतिः, यज्ञो वै प्रजापतिः, अपरिमितो वै प्रजापतिः, अहर्वै मित्रो रात्रिर्वरुणः। एवं स्वर्गादिलोकवर्णनमपि। तद्यथा—परोवरीयांसो वा इमे लोका अर्वाग्गंहीयांसः, इतः सहस्राश्वगन्तव्ययोजनपरिमितदेशे खलु स्वर्गो लोक इत्येवमनेके विचित्राश्चित्ताकर्षका विषया उपवर्णिता दृश्यन्ते। ते चात्र क्रमेण संगृहीताः—

( क ) देवानां सामान्येन वर्णनम्—

अहर्वै देवा अश्रयन्त रात्रीमसुराः। ( ऐ० ब्रा० ४।५ )

त्रयस्त्रिंशद्वै देवाः। अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च। ( ऐ० ब्रा० १।१० )

त्रयस्त्रिंशद्वै देवाः सोमपास्त्रयस्त्रिंशदसोमपाः। अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्चैते देवाः सोमपाः। एकादश प्रयाजा एकादशानुयाजा एकादशोपयाजा एतेऽसोमपाः पशुभाजनाः। ( ऐ० ब्रा० २।१८ )

देवानां मिथुनेन मिथुनं प्रजायन्ते प्रजात्यै। (ऐ० ब्रा० ५।२२)

देवसम्बन्धिमिथुनानुग्रहेण मानुषमिथुनमुत्पादयन्तीत्यर्थः।

देवा वै यज्ञमतन्वत। तांस्तन्वानानसुरा अभ्यायन् यज्ञवेशसमेषां करिष्याम इति। ( ऐ० ब्रा० २।११ )

यज्ञवेशसं यज्ञविघातम् ( सायणः )।

देवा वै यज्ञेन श्रमेण तपसाहुतिभिः स्वर्गं लोकमजयन् ।

( ऐ० ब्रा० २।१३ )

न वै देवा अन्योन्यस्य गृहे वसन्ति । नर्तुरृतोर्गृहे वसतीत्याहुः । ( ऐ० ब्रा० ५।६ )

स्वाधिकारमनतिक्रम्यैव देवाः कार्यं कुर्वन्तीति भावः ।

न ह वा अव्रतस्य देवा हविरश्नन्ति । ( ऐ० ब्रा० ७।११ )

परोक्षप्रिया इव हि देवाः । ( ऐ० ब्रा० ३।४३ )

देवाः पूज्या आचार्यादयः परोक्षनामप्रिया एव । शीघ्रप्रतीतिरहितं नाम परोक्षमित्युच्यते । ( सायणः )

( ख ) तत्तद्देवानां वर्णनम् । १—तत्राग्निः ।

अग्निर्वै देवयोनिः । ( ऐ० ब्रा० १।२२ )

अग्निर्वै देवयोनिः । सोऽग्नेर्देवयोन्या आहुतिभ्यः संभूय हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेति । ( ऐ० ब्रा० २।१४ )

स यजमानः ।

अग्निर्वै देवानामवमो विष्णुः परमः । तदन्तरेण सर्वा अन्या देवताः । ( ऐ० ब्रा० १।१ )

अवमः प्रथमः । परमः उत्तमः ।

अग्निर्वै देवानां गोपाः । ( ऐ० ब्रा० १।२८ )

अग्निर्वै देवानां नेदिष्ठः । ( ऐ० ब्रा० ७।१६ )

नेदिष्ठः । हविर्वहनेनातिसमीपवर्ती ।

अग्निर्हि देवानां पशुः । ( ऐ० ब्रा० १।१५ )

यथानड्वान् हव्यं वहति, तथाग्निरपि हव्यं वहति। तस्मादग्नेः पशुसाम्यम्। (सायणः)

अग्निर्वै देवानां मुखं सुहृदयतमः। (ऐ० ब्रा० ७।१६)

मुखम्। मुखस्थानीयः। अग्निद्वारेणैव सर्वैर्देवैर्हविःस्वीकारात्।

अग्निर्वै देवानां वसिष्ठः। (ऐ० ब्रा० १।२८)

वसिष्ठोऽतिशयेन निवासहेतुः (सायणः)।

अग्निर्वै देवानां होता। (ऐ० ब्रा० १।२८)

होता होमनिष्पादकः।

अग्निर्वै परिक्षित्। अग्निर्हीमाः प्रजाः परिक्षेति, अग्निं हीमाः प्रजाः परिक्षियन्ति। (ऐ० ब्रा० ६।३२)

परिक्षेति परिपालयन् निवसति। परिक्षियन्ति परितः सेवमाना निवसन्ति।

अग्निर्वै सर्वा देवताः। (ऐ० ब्रा० १।१)

अग्निर्वै स्वर्गस्य लोकस्याधिपतिः। (ऐ० ब्रा० ३।४२)

अग्निश्च ह वै विष्णुश्च देवानां दीक्षापालौ। तौ दीक्षाया ईशाते।

(ऐ० ब्रा० १।४)

अग्नेर्वा एताः सर्वास्तन्वो यदेता देवताः। स यदग्निः प्रवानिव दहति तदस्य वायव्यं रूपम्।... ...अथ यद् द्वैधमिव कृत्वा दहति। द्वौ वा इन्द्रवायू। तदस्यैन्द्रवायवं रूपम्।... ...अथ यदुच्च ह्रष्यति नि च ह्रष्यति तदस्य मैत्रावरुणं रूपम्।... ...स यदग्निर्घोरसंस्पर्शस्तदस्य वारुणं रूपम्। तं यद् घोरमसंस्पर्शं सन्तं मित्रकृत्येवोपासते तदस्य मैत्रं रूपम्।... ...अथ यदेनं द्वाभ्यां

बाहुभ्यां द्वाभ्यामरणीभ्यां मन्थन्ति। द्वौ वा अश्विनौ। तदस्याश्विनं रूपम्।......अथ यदुच्चैर्घोषः स्तनयन् बबबा कुर्वन्निव दहति। यस्माद् भूतानि विजन्ते। तदस्यैन्द्रं रूपम्।......अथ यदेनमेकं सन्तं बहुधा विहरन्ति तदस्य वैश्वदेवं रूपम्।......अथ यत् स्फूर्जयन् वाचमिव वदन् दहति तदस्य सारस्वतं रूपम्।

( ऐ० ब्रा० ३।४ )

प्रवानिव। प्रकर्षवानिव। उच्च हृष्यति नि च हृष्यति। ज्वलतोऽग्नेरौन्नत्यमुद्धर्षः, ज्वालाशान्त्या नीचत्वं निहर्षः। मित्रकृत्येवोपासते। मित्रस्य कृतिः कार्यं समीपेऽवस्थानं तेनैव शीतपरिहाराय वह्निं सेवन्ते।

अप्रमादो वा एषोऽपतिर्यदग्निः। ( ऐ० ब्रा० १।८ )

अयं वा अग्निर्मन्विद्धः। इमं हि मनुष्या इन्धते। अयं वा अग्निर्होता मनुवृतः। अयं हि सर्वतो मनुष्यैर्वृतः।......अयं वा अग्निरतूर्तो होता। इमं ह न कश्चन तिर्यञ्चं तरति।......अयं वा अग्निर्देवो देवान् यजति। ( ऐ० ब्रा० २।३४ )

अतूर्तः येनाप्यतीर्णः।

देवो ह्येष एतज्जीवातवे कृतो यदग्निः। ( ऐ० ब्रा० १।२८ )

जीवातवे अस्माकं जीवनोपधाय ( सायणः )।

द्यावापृथिवीभ्यां वा एतं जातं देवाः पर्यगृह्णंस्ताभ्यामेवाद्यापि परिगृहीतः। ( ऐ० ब्रा० १।१६ )

एतमग्निम्। पावकोऽग्निर्भूम्या परिगृहीतः, प्रकाशकः सूर्यरूपोऽग्निर्दिवा परिगृहीतः। ( सायणः )

रक्षांसि वा एन तद्योलभन्ते यहि न जायते यहिं चिरं जायते ।

( ऐ० ब्रा० १।१६ )

एन वह्निम् । आलभन्ते । संस्पृशन्ति । प्रतिबध्नन्तीत्यर्थः । (सायण)

२—अश्विनौ ।

अश्विनौ हि देवानां भिषजौ । अश्विनावध्वर्यू ।

( ऐ० ब्रा० १।१८ )

३—अग्निरुषा अश्विनौ च ।

एते वाव देवा प्रातर्यावाणो यदग्निरुषा अश्विनौ ।

( ऐ० ब्रा० २।१५ )

प्रातर्यावाण सुत्यादिने प्रात काले यज्ञभूमिं यान्ति । ( सायण )

४—आदित्य , सविता ।

अक्नूयो वा एष प्रातरुदेत्येष सायं प्रविशति ।

( ऐ० ब्रा० ४।२० )

एष आदित्य ।

असौ वा अग्निर्देवेद्ध एत हि देवा इन्धते । असौ वै होता देववृत । एष हि सर्वतो देवैर्वृत । असौ वै रथीरध्वराणाम । एष हि यथैतच्चरति रथीरिव असौ वै देवा देवानावहति ।

( ऐ० ब्रा० २।३४ )

असौ वा अग्नि । असौ आदित्यमण्डलेऽवस्थित । यथैतच्चरति रथीरिव । लोके यथा कश्चन रथवान् गन्तव्यस्थानं गच्छति तद्वत् ।

आदित्यो वै दैवं क्षत्रम् । आदित्य एषां भूतानामधिपति ।

( ऐ० ब्रा० ७।२० )

एयम्‌ खलु वा आदित्यः सर्वाणि भूतानि प्रणयति। तस्मादेनं प्राण इत्याचक्षते। ( ऐ० ब्रा ५।३१ )

प्रणयति चेष्टयति।

तस्य ह न काचन रिष्टिर्भवति देवेन सवित्रा प्रसूतस्य।

( ऐ० ब्रा० ७।२० )

तां वा एतां देवतां प्रयतीं सर्वमिदमनुप्रैति यदिदं किञ्च। एतस्यै हीदं देवताया अनुचरं सर्वं यदिदं किञ्च। सैषानुचरवती देवता। ( ऐ० ब्रा० ५।३० )

ताम्‌ एतामादित्यदेवताम्‌। प्रति प्रवर्तते। अनुचरं भृत्यस्थानीयम्‌।

स वा एष उत्तरोऽस्मात्‌ सर्वस्माद्‌ भूताद्‌ भविष्यतः सर्वमेवेदमतिरोचते यदिदं किञ्च। ( ऐ० ब्रा० ४।१८ )

एष आदित्यः।

स वा एष न कदाचनास्तमेति नोदेति। तं यदस्तमेतीति मन्यन्तेऽह्न एव तदन्तमित्वाऽथात्मानं विपर्यस्यते रात्रीमेवावरस्तात्कुरुतेऽहः परस्तात्‌। अथ यदेनं प्रातरुदेतीति मन्यन्ते रात्रेरेव तदन्तमित्वाथात्मानं विपर्यस्यतेऽहरेवावस्तात्कुरुते रात्रीं परस्तात्‌। स वा एष न कदाचन निम्रोचति न ह वै कदाचन निम्रोचति।

( ऐ० ब्रा० ३।४४

सः सूर्यः। निम्रोचनमस्तमयः।

सविता वै प्रसवानामीशे ( ऐ० ब्रा० १।१६ )

ईशे स्वामी भवति ( सायणः )।

५—अग्निर्वायुरादित्यश्च ।

अग्निर्गृहपतिरिति हैक आहुः । सोऽस्य लोकस्य गृहपतिः । वायुर्गृहपतिरिति हैक आहुः । सोऽन्तरिक्षलोकस्य गृहपतिः । असौ वै गृहपतिर्योऽसौ तपति । एष पतिर्ऋतवो गृहाः । (ऐ० ब्रा० ५।२५)

६—आपः ।

आपो वै मरुतः । आपोऽन्नम् । ( ऐ० ब्रा० ६।३० )
मरुतो वृष्टिद्वारेणाप एव । अपां चान्नहेतुत्वादन्नत्वम् ।
आपो वै सर्वा देवताः । रेवत्यः सर्वा देवताः । (ऐ० ब्रा० २।१६)
रायो धनानि यासां भवन्तीति रेवत्यः ।

७—इन्द्रः ।

इन्द्रो वै गोपाः ।······इन्द्रो वै त्वष्टा ।······इन्द्रो वै वेधाः ।
( ऐ० ब्रा० ६।१० )
इन्द्रो वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमः ।
( ऐ० ब्रा० ७।१६ )
ओजो दीप्तिर्बलं दार्ढ्यं, प्रसह्यकरणे सहः । सुजनः सन्, पारयिष्णुरुपक्रान्तसमाप्तिकृत् ॥ ( सायणभाष्ये पूर्वाचार्यवचनम् )
इन्द्रो वै वृत्रं हत्वा विश्वकर्माभवत् । ( ऐ० ब्रा० ४।२२ )
ओकःसारी वा इन्द्रो यत्र वा इन्द्रः पूर्वं गच्छत्यैव तत्रापरं गच्छति । ( ऐ० ब्रा० ६।१७ )
ओकांसि स्थानानि गृहाणि तेषु सरति सर्वदा सञ्चरतीति ओकःसारी मार्जारः । वै-शब्द उपमार्थः । यथा मार्जारः पूर्वस्मिन् दिने येषु गृहेषु

सञ्चरति, तेष्वेव गृहेषु परेद्युरपि सञ्चरति। एवमयमिन्द्रोऽप्यवगन्तव्यः। ( सायणः )

घृतेन हि वज्रेणेन्द्रो वृत्रमहन्। ( ऐ० ब्रा० १।२६ )

८—इन्द्राग्नी।

इन्द्राग्नी वै देवानामोजिष्ठौ बलिष्ठौ सहिष्ठौ सत्तमौ पारयिष्णुतमौ। ( ऐ० ब्रा० २।३६ )

६—इन्द्रो विष्णुश्च।

इन्द्रश्च ह वै विष्णुश्चासुरैर्युयुधाते।……( ऐ० ब्रा० ६।१५ )

१०—ऋभवः।

ऋभवो वै देवेषु तपसा सोमपीथमभ्यजयन्।……तेभ्यो वै देवा अपैवाबीभत्सन्त मनुष्यगन्धात्। ( ऐ० ब्रा० ३।३० )

ऋभुनामकाः केचन मनुष्यविशेषा देवत्वं प्राप्ताः। मनुष्यगन्धाद्धेतोस्तेभ्यः 'अपैव' स्वयमपगताः सन्तोऽग्न्यादयः 'अबीभत्सन्त' मनसि बीभत्सा कृतवन्तः।

प्रजापतिर्वै पित ऋभून् मर्त्यान् सतोऽमर्त्यान् कृत्वा तृतीयसवनं आभजत्। ( ऐ० ब्रा० ६।१२ )

११—चन्द्रमाः।

एतद्वै देवसोम यच्चन्द्रमाः। ( ऐ० ब्रा० ७।११ )

देवसोमम्। देवानामपेक्षितं सोमद्रव्यसदृशं वस्तु। ( सायणः )

१२—मरुतः।

देवविशः कल्पयितव्या इत्याहुस्ताः कल्पमाना अनु मनुष्यविशः कल्पन्ते। ( ऐ० ब्रा० १।६ )

मरुतो वै देवविशोऽन्तरिक्षभाजना । ( ऐ० ब्रा० १।१० )

मरुतो वै देवाना विश । ( ऐ० ब्रा० १।६ )

१३— द्यावापृथिव्यौ ।

अय वै लोको ज्योतिरसौ लोका ज्योतिस्त एते ज्योतिषी समयत सलोक्ते । ( ऐ० ब्रा० ४।१५ )

असाविमा वृष्ट्याऽभ्युनत्त्यभिजिघ्रति । ( ऐ० ब्रा० १।७ )

असौ द्यौ । इमां भूमिम् । अभ्युनत्ति सर्वत क्लेदयति । अभिजिघ्रति घर्मकाल भूमिगतं रसमाभिमुख्येनादत्ते ।

इय वा ओषधीना प्रतिष्ठा । ( ऐ० ब्रा० २।६ )

इय भूमि ।

द्यावापृथिवी वै देवाना हविर्धाने आस्ताम् । ते उ एवाद्यापि हविर्धाने । ते हीदमन्तरेण सर्वं हविर्यदिदं किञ्च ।

( ऐ० ब्रा० १।२६ )

द्यावापृथिवी वै प्रतिष्ठे । इयमेवेह प्रतिष्ठा, असावमुत्र ।

( ऐ० ब्रा० ३।२६ )

इह मनुष्यजन्मनि । अमुत्र जन्मान्तरे । असौ द्युलोक । (सायण )

धूमेनैवेयममूं जिन्वति । वृष्ट्यासाविमाम् । ( ऐ० ब्रा० ४।२७)

इय भूमि । जिन्वति प्रीणयति । असौ द्यौ ।

१४—प्रजापति ।

अनिरुक्तो वै प्रजापति । ( ऐ० ब्रा० ६।२० )

अन्नादा चान्नपत्नी च । अन्नादा तदग्निरन्नपत्नी तदादित्य । भद्रा च कल्याणी च । भद्रा तत्सोम कल्याणी तत्पशव ।

अनिलया चाभया च । अनिलया तद्वायुः । न ह्येष कदा च नेलयति । अभया तन्मृत्युः । सर्वं ह्येतस्माद् बीभाय । अनाप्ता चानाप्या च । अनाप्ता तत्पृथिव्यनाप्या तद् द्यौः । अनाधृष्या चाप्रतिधृष्या च । अनाधृष्या तदग्निरप्रतिधृष्या तदादित्यः । अपूर्वा चाभ्रातृव्या च । अपूर्वा तन्मनोऽभ्रातृव्या तत्संवत्सरः । एता वाव द्वादश प्रजापतेस्तन्वः । एष कृत्स्नः प्रजापतिः । ( ऐ० ब्रा० ५।२५ )

तन्वो मूर्तयः । अन्नपत्नी अन्नस्य पालयित्री । आदित्याज्जायते वृष्टिरिति न्यायेन । नेलयति न गच्छति । बीभाय भीतिं प्राप्नोति । अनाप्ता भूमिः । असंयोगपूर्वस्य संयोगस्य प्राप्तिशब्दार्थत्वस्याभावादिति भावः । अनाधृष्या । अग्निर्हि स्पर्शेन धर्षितुमशक्यः । अप्रतिधृष्या । आदित्यो हि केनापि प्रतिबन्धेनाभिभवितुमशक्यः । अपूर्वा । सर्वमपीन्द्रियजातं मनसा सङ्कल्पिते विषये पश्चात्प्रवर्ततेऽतोऽपूर्वा । अभ्रातृव्या । यतः कालात्मा संवत्सरः सर्वं जरयति । न तमन्यः कश्चिज्जरयितुं समर्थः ।

अपरिमितो वै प्रजापतिः । ( ऐ० ब्रा० २।१७ )

एकविंशो वै प्रजापतिः । द्वादश मासाः । पञ्चर्तवः । त्रय इमे लोकाः । असावादित्य एकविंश उत्तमा प्रतिष्ठा । तद्दैवं क्षत्रम् । सा श्रीः । तदाधिपत्यम् । तद् ब्रध्नस्य विष्टपम् । तत्प्रजापतेरायतनम् । तत्स्वाराज्यम् । ( ऐ० ब्रा० १।३० )

तत् । आदित्यमण्डलम् । ब्रध्नस्य आदित्यस्य । विष्टपं स्थानभूतम् । ( सायणः )

को वै नाम प्रजापतिः । ( ऐ० ब्रा० ३।२१ )

को वै प्रजापतिः। ( ऐ० ब्रा० ६।२१ )

त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि। तावान्संवत्सरः। संवत्सरः प्रजापतिः। प्रजापतिर्यज्ञः। ( ऐ० ब्रा० २।१७ )

प्रजापतिः प्रजा सृष्ट्वा विश्वकर्माभवत। संवत्सरो विश्वकर्मा। ( ऐ० ब्रा० ४।२२ )

प्रजापतिं वै प्रजा अनु प्र जायन्त। प्रजापतिरूनातिरिक्तयोः प्रतिष्ठा।

( ऐ० ब्रा० ५।२४ )

प्रतिष्ठा आश्रयः। समाधानहेतुः।

प्रजापतिर्वा इदमेक एवाग्र आस सोऽकामयत प्रजायेय भूयान् स्यामिति। स तपोऽतप्यत। स वाचमयच्छत्। ( ऐ० ब्रा० २।३३ )

वाचमयच्छत्। मौनव्रतं कृतवानित्यर्थः।

प्रजापतेर्वा एतान्यङ्गानि यच्छन्दांस्येष उ एव प्रजापतिर्यो यजते।

( ऐ० ब्रा० २।१८ )

प्रजापतिर्वै कः। ( ऐ० ब्रा० २।३८ )

प्रजापतिर्वै यज्ञः। ( ऐ० ब्रा० ४।२६ )

प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत्। दिवमित्यन्य आहुरुष समित्यन्ये।......( ऐ० ब्रा० ३।३३ )

सप्तदशो वै प्रजापतिः। द्वादश मासाः पञ्चर्तवो हेमन्तशिशिरयोः समासेन। तावान् संवत्सरः। संवत्सरः प्रजापतिः।

( ऐ० ब्रा० १।१ )

स वा अयं प्रजापतिः संवत्सर ऋतुषु च मासेषु च प्रत्यतिष्ठत्। ते वा इम ऋतवश्च मासाश्च प्रजापतावेव संवत्सरे प्रत्यतिष्ठन्। त एतेऽन्योन्यस्मिन् प्रतिष्ठिताः। (ऐ० ब्रा० ४।२५)

संवत्सरः प्रजापतिः। प्रजापतिर्यज्ञः। (ऐ० ब्रा० ६।१९)

संवत्सरः प्रजापतिः। सोऽस्य सर्वस्य प्रजनयिता।

(ऐ० ब्रा० २।३६)

संवत्सरः प्रजापतिर्य प्रजायमानं विश्वं रूपमिदमनु प्रजायते।

(ऐ० ब्रा० २।१७)

१५—बृहस्पतिः।

ब्रह्म वै बृहस्पतिः। (ऐ० ब्रा० १।१३)

बृहस्पतिर्ह वै देवानां पुरोहितस्तमन्वन्ये मनुष्यराज्ञां पुरोहिताः।

(ऐ० ब्रा० ८।२६)

१६—मित्रावरुणौ।

अहर्वै मित्रो रात्रिर्वरुणः। (ऐ० ब्रा० ४।१०)

१७—वषट्कारः।

ओजश्च ह वै सहश्च वषट्कारस्य प्रियतमे तन्वौ।

(ऐ० ब्रा० ३।८)

यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद् वषट् करिष्यन् साक्षादेव तद्देवतां प्रीणाति प्रत्यक्षाद्देवतां यजति।

(ऐ० ब्रा० ३।८)

वाक् च वै प्राणापानौ च वषट्कारः। (ऐ० ब्रा० ३।८)

वज्रो वा एष यद्वषट्कारो यं द्विष्यात्तं ध्यायेद्वषट् करिष्यंस्त-स्मिन्नेव तं वज्रमास्थापयति। ( ऐ० ब्रा० ३।६ )

त्रयो वै वषट्कारा वज्रो धामच्छद्रिक्तः। स यमेवोच्चैर्बलि वषट्करोति स वज्रः। त तं प्रहरति द्विषते भ्रातृव्याय वधं योऽस्य स्तृत्यस्तस्मै स्तर्तवै। तस्मात्स भ्रातृव्यवता वषट्कृत्यः। अथ यः समः सन्ततोऽनिर्हाणर्चः स धामच्छद्। तं तं प्रजाश्च पशवश्चा-नूपतिष्ठन्ते। तस्मात्स प्रजाकामेन पशुकामेन वषट्कृत्यः। अथ येनैव पलवराध्नोति स रिक्तः। रिणक्त्यात्मानं रिणक्ति यजमानं पापीयान् वषट्कर्ता भवति पापीयान्यस्मै वषट्करोति। तस्मात्तस्याशां नेयात्। ( ऐ० ब्रा० ३।७ )

स्तृत्यो हन्तव्यः। सन्ततो याज्यया सह विच्छेदरहितः। निर्हाणर्चः याज्यारूपाया ऋचः पाठेन हीनः। अनिर्हाणर्चः सम्पूर्णयाज्यापाठोपेतः। धामच्छद्। धाम यज्ञस्थानं, तत्र यथा रक्षांसि न प्रविशन्ति तथा छादयति सः। षट्शब्दो वषट्कारमभिधत्ते, एकदेशेन व्यवहारात्। वषट्कारावरोधस्तत्सम्बद्धप्रभावः, स च तस्य नीचोच्चारणेन। रिणक्ति रिक्तीकरोति दरिद्रं करोतीत्यर्थः। तस्याशाम्। तस्य रिक्तस्य वषट्कार-स्येच्छामपि।

१८—वायुः।

वायुर्वा अग्निः सुषमित्। वायुर्हि स्वयमात्मानं समिन्धे। स्वयमिदं सर्वं यदिदं किञ्च।······वायुर्वै प्राणो यज्ञानाम्। यदा हि प्राणित्यथ यज्ञोऽथाग्निहोत्रम्।······वायुर्वै तूर्णिर्हव्यवाट्। वायुर्हीदं सर्वं सद्यस्तरति यदिदं किञ्च। वायुर्देवेभ्यो हव्यं

वहति।……वायुर्वै जातवेदाः। वायुर्हीदं सर्वं करोति, यदिदं किञ्च। (ऐ० ब्रा० २।३४)

वायुर्ह्येव प्रजापतिः। (ऐ० ब्रा० ४।२६)

१६—विष्णुः।

यद्विक्रान्तवत्तद्वैष्णवम्। (ऐ० ब्रा० ३।१८)

विष्णुः सर्वा देवताः। (ऐ० ब्रा० १।१)

विष्णुर्वै देवानां द्वारपः। (ऐ० ब्रा० १।३०)

विष्णुर्वै यज्ञः। (ऐ० ब्रा० १।१५)

२०—विष्णुर्वरुणश्च।

विष्णुर्वै यज्ञस्य दुरिष्टं पाति, वरुणः स्विष्टम्।……यथा वै मत्यमेवं यज्ञस्य विष्णुः। तद्यथा दुष्कृष्टं दुर्मतीकृतं सुकृष्टं सुमतीकृतं कुर्वन्नियादेवमेवैतद्यज्ञस्य दुष्टुतं दुःशस्तं सुष्टुतं सुशस्तं कुर्वन्नेति यदेतां होता शंसति। (ऐ० ब्रा० ३।३८)।

दुरिष्टम् अङ्गविकलं यदनुष्ठितं तद्विष्णुः पाति। वैकल्यं निवारयतीत्यर्थः। स्विष्टं साकल्येन यदङ्गमनुष्ठितं तद्वरुणः पाति। तस्य फलप्रतिबन्धं निवारयतीत्यर्थः। बुद्धो सम्यक्त्वेन प्रतिभातं कार्यं मत्यम् (सायणः)। एता वैष्णवीमृचम्।

२१—संवत्सरः।

एते ह वै संवत्सरस्य चक्रे यदहोरात्रे ताभ्यामेव तत्संवत्सरमेति। (ऐ० ब्रा० ५।३०)

संवत्सरो वै परिक्षित्। संवत्सरो हीमाः प्रजाः परि क्षेति, संवत्सरं हीमाः प्रजाः परि क्षियन्ति। (ऐ० ब्रा० ६।३२)

२२—साध्या देवाः ।

छन्दांसि वै साध्या देवाः । ( ऐ० ब्रा० १।१६ )

२३—सोमः ।

एष वै ब्राह्मणानां सभासाहः सखा यत्सोमो राजा ।

( ऐ० ब्रा० १।१३ )

सभासाहः । विद्वत्सभा विद्याप्रसङ्गेन सहते अभिभवति सभासाहः ।

( सायणः )

तदाहुः क्रूरमिव वा एतत्सोमस्य राज्ञोऽन्ते चरन्ति यदस्य घृतेनान्ते चरन्ति । घृतेन हि वज्रेणेन्द्रो वृत्रमहन् ।

( ऐ० ब्रा० १।२६ )

द्यावापृथिव्योर्वा एष गर्भो यत्सोमो राजा ।

( ऐ० ब्रा० १।२६ )

पापो हि सोमविक्रयी । ( ऐ० ब्रा० १।१२ )

सोमः सर्वा देवताः । ( ऐ० ब्रा० २।३ )

(ग) पितरः ।

ऊमा वै पितरः प्रातःसवने, ऊर्वा माध्यन्दिने, काव्यास्तृतीयसवने । ( ऐ० ब्रा० ७।३४ )

ऊमाः, ऊर्वाः, काव्याः – इत्येते सवनत्रयगताः पितृविशेषाः ।

(घ) रक्षांसि गन्धर्वाश्च ।

तिर इवैवद्रक्षांसि । ( ऐ० ब्रा० २।७ )

रक्षांसि इति यदस्ति एतदपि तिर इव । चोरवच्छ्रे रक्षसां गूढचारित्वात् । ( सायणः )

स्त्रीकामा वै गन्धर्वाः। ( ऐ० ब्रा० १।२७ )

(ङ) देवासुराः।

देवासुरा वा लोकेषु एषु समयतन्त। ( ऐ० ब्रा० १।१४ )

(च) स्वर्गादिलोकाः।

अपरिमितो वै स्वर्गो लोकः। ( ऐ० ब्रा० ६।८ )

अस्माल्लोकादन्तरिक्षलोकमभि प्रवहति।...अन्तरिक्षलोकादमुं लोकम्। अभ्यन्तरिक्षलोको हि ज्येष्ठः।......अमुष्माल्लोकात्स्वर्गं लोकमभि। ( ऐ० ब्रा० ६।६ )

अस्य वै लोकस्यासौ लोकोऽनुरूपोऽमुष्य लोकस्यायं लोकोऽनुरूपः। ( ऐ० ब्रा० ८।२ )

अस्मिँल्लोके दत्तेन हविषा देवाः स्वर्गे जीवन्ति, स्वर्गादागतया वृष्ट्या मनुष्या जीवन्ति, तदेतत्परस्परमनुरूपत्वम्।

अहर्वै स्वर्गो लोकः। ( ऐ० ब्रा० ५।२४ )

आप्त्वैव तत्स्वर्गं लोकं यजमाना अस्मिन् लोके प्रतितिष्ठन्ति।
( ऐ० ब्रा० ६।२० )

त्रय इम ऊर्ध्वा एकविंशा लोकाः। ( ऐ० ब्रा० १।५ )

इमे पृथिव्यन्तरिक्षस्वर्गरूपाः, एकैकस्मादूर्ध्वत्वेन वर्तमानाः, प्रत्येकमेकविंशत्यवयवसमूहरूपा लोकास्त्रयो विद्यन्ते। ( सायणः )

त्रयो वा इमे त्रिवृतो लोकाः। ( ऐ० ब्रा० २।१७ )

इमे पृथिव्यन्तरिक्षद्युलोका रज्जुवत् त्रिवृत इत्यर्थः।

देवयाना वै ज्योतिष्मन्तः पन्थानः। ( ऐ० ब्रा० ३।३८ )

नव स्वर्गा लोकाः। ( ऐ० ब्रा० ४।१६ )

परो वा अस्माल्लोकात् स्वर्गो लोकः। ( ऐ० ब्रा० ६।२० )

परोवरीयांसो वा इमे लोका अर्वागंहीयांसः। (ऐ० ब्रा० १।२५)

इमे लोकाः परोवरीयासः परस्तादूर्ध्वभागे निवसन्तोऽत्यन्तं विस्तृताः। अर्वागधोभागे अंहीयासोऽतिशयेनाणुवत्संकुचिताः। ( तु० सायणः )

रेभन्तो वै देवाश्च ऋषयश्च स्वर्गं लोकमायन्। तथैवैतद्यजमाना रेभन्त एव स्वर्गं लोकं यन्ति। ( ऐ० ब्रा० ६।३२ )

रेभन्तः। शब्दं कुर्वन्तः। कीर्तिं कुर्वन्त इत्यर्थः।

सप्त वै देवलोकाः। ( ऐ० ब्रा० २।१७ )

सप्त भूलोकादयः सत्यलोकान्ताः।

सहस्राश्वीने वा इतः स्वर्गो लोकः। ( ऐ० ब्रा० २।१७ )

प्रबलोऽश्व एकेनाह्ना यावन्ति योजनानि गच्छति तावद्योजनपरिमितो देशोऽश्वीनः। स च सहस्रसंख्यया गुणितः सहस्राश्वीनः। ( सायणः )

स्वर्गो वै लोको दूरोहणम्। ( ऐ० ब्रा० ४।२१ )

स्वर्गारोहणं दुष्करमिति भावः।

स्वर्गो वै लोको ब्रध्नस्य विष्टपम्। ( ऐ० ब्रा० ४।४ )

ब्रध्नस्य आदित्यस्य। विष्टपं स्थानम्। ( सायणः )

स्वर्ग्यैवोर्ध्वा दिक्। ( ऐ० ब्रा० १।८ )

## (१४) अग्न्यादिपदार्थविज्ञानम्।

अस्तीह ब्राह्मणे तत्तत्प्रसङ्गेन नैकविधपदार्थानां गुणवर्णना तद्विषयक-विज्ञानस्य चर्चा च। अग्न्यादीनां देवतात्वेन प्रसिद्धानामपि विषय आधिभौतिकदृष्ट्यैतादृशं वर्णनं विद्यते। आधिदैविकदृष्ट्या कृतं तु

तद्विषयकं वर्णनमुपरिष्टादेव निर्दिष्टम्। आतपयुक्तवर्षभवा आपो वै ब्रह्मवर्चसं तेजः, अप्सुप्रदोऽग्नयो वै वर्चसो बलस्य ओजसश्च साधनम्, प्राणा हीदं सर्वं समिन्धते यदिदं किञ्च, प्राणो वै जातवेदाः, वायुर्हि स्वयमात्मानं सर्वञ्चेदं समिन्धे, विद्युदादीनां वायावन्तर्धानप्रकारः, अश्वत्थस्य तेजसः समुत्पत्तिः, इत्यादिरूपेणात्युपयोगिवर्णनं विद्यते। तथाहि—

अग्निना वै तेजसा रात्रिस्तेजस्वती। आदित्येन तेजसाहस्तेजस्वत्। ( ऐ० ब्रा० ५।२६ )

अग्निर्वै शर्माण्यन्नाद्यानि यच्छति। ( ऐ० ब्रा० २।४१ )

शर्माणि सुखकराणि।

वायोरग्निर्जायते। प्राणाद्धि बलान्मथ्यमानोऽधिजायते।

( ऐ० ब्रा० ८।२८ )

अग्नेर्वा आदित्यो जायते। ( ऐ० ब्रा० ८।२८ )

रात्रावग्नि प्रविष्ट आदित्यः परेद्युरग्नेर्जायते। अत एवाहनि अग्निस्तेजोरहितः, सूर्योऽधिकतेजा भासते। ( सायणः )

आदित्याद्वै चन्द्रमा जायते। ( ऐ० ब्रा० ८।२८ )

अमावास्यायामादित्ये प्रविष्टश्चन्द्रमाः शुक्लप्रतिपदि आदित्याज्जायते।

अमृतं वा एतदस्मिँल्लोके यदापः। ( ऐ० ब्रा० ८।२० )

इमा आपः शिवतमा इमाः सर्वस्य भेषजीः।
इमा राष्ट्रस्य वर्धनीरिमा राष्ट्रभृतोऽमृताः॥

( ऐ० ब्रा० ८।७ )

तेजश्च ह वै ब्रह्मवर्चसं चातपवर्ष्या आपः। ( ऐ० ब्रा० ८।८)

आतपयुक्तवर्षभवा आर आतपवर्ष्याः ( सायणः )

पशवो वा एते यदापः। ( ऐ० ब्रा० १।८ )

प्रतीच्योऽप्यापो बह्व्यः स्यन्दन्ते। ( ऐ० ब्रा० १।७ )

पश्चिमसमुद्रसमीपे प्रवहन्तीनां नदीनां पश्चिमाभिमुखत्वमित्यर्थः।

शान्तिर्वा आपः। ( ऐ० ब्रा० ७।५ )

शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे।
सर्वाँ अग्नीँरप्सुषदो हुवे वो मयि वर्चो बलमोजो निधत्त॥
( ऐ० ब्रा० ८।६ )

अप्सु जलेषु सीदन्तीति अप्सुषदः। और्वादयोऽग्नयः। ( सायणः )

सर्वदेवत्या वै स्तोकास्तस्मादियं स्तोकशो वृष्टिर्विभक्तो- पाचरति। ( ऐ० ब्रा० २।१२ )

अग्निसंयोगाद्ये मेदसो बिन्दवः श्चोतन्ति तेऽत्र स्तोकाः। स्तोकशः प्रतिबिन्दुभिः। उपाचरति भूसमीपमागच्छति।

इयं वै श्रीः। ( ऐ० ब्रा० ८।५ )

इयं भूमिः।

इयं हि सर्पराज्ञी। इयं हि सर्पतो राज्ञी। इयं वा अलो- मिकेवाग्र आसीत।······तामयं पृश्निर्वर्ण आविशन्नानारूपो यं यं काममकामयत। यदिदं किञ्चौषधयो वनस्पतयः सर्वाणि रूपाणि। ( ऐ० ब्रा० ५।२३ )

इयं भूमिः। सर्पतः संचरतो जङ्गमस्य मनुष्यादेः। पृश्निर्नानारूपो नीलपीतादिः। वर्णशब्देन सर्वमपि भोग्यजातमुपलक्ष्यत इति सायणः। शप्तो भूमिरकामयत।

... तस्याः शःचस्या, इमे प्रदराः प्रादीयन्त येऽस्या इमे प्रदराः। समैव हैव ततः पुरा। ( ऐ० आ० ६।३५ )

तस्याः पृथिव्याः। प्रदरेभ्यः पूर्वमियं भूमिः समतलैवासीदिति भाव.।

ऊर्ग् वै वसन्तः। ( ऐ० ब्रा० ४।२६ )

ऋतुःवै प्रतितिष्ठत इदं सर्वमनुप्रतितिष्ठति यदिदं किञ्च।
( ऐ० ब्रा० ३।६ )

ऋतुश एव तत्संवत्सरमाप्नुवन्ति। ऋतुशः संवत्सरे प्रतितिष्ठन्तो यन्ति। ( ऐ० ब्रा० ४।१६ )

यो वै संवत्सरस्यावार च पार च वेद स वै स्वस्ति संवत्सरस्य पारमश्नुते। ... यो वै संवत्सरस्यावरोधनं चोद्रोधनं च वेद स वै स्वस्ति संवत्सरस्य पारमश्नुते। ... यो वै संवत्सरस्य प्राणोदानौ वेद स वै स्वस्ति संवत्सरस्य पारमश्नुते।
( ऐ० ब्रा० ४।१४ )

अवरुध्यते स्वाधीनं क्रियते येन प्रारम्भरूपेण कर्मणा तत्कर्मावरोधनम्। उद्रुध्यते समाप्यते येन कर्मणा तदुद्रोधनम्।

चन्द्रमसो वै वृष्टिर्जायते। ( ऐ० ब्रा० ८।२८ )

तस्मादिदं प्राच्या ग्रामता बहुलाविष्टाः।......तस्मादिदं प्रत्यञ्चि दीर्घारण्यानि भवन्ति। ( ऐ० ब्रा० ३।४४ )

पूर्वदिग्वर्तिनो ग्रामसमूहाः बहुभिर्जनैः संपूर्णा भवन्ति। प्रत्यञ्चि पश्चिमदिग्वर्तीनि। ( सायणः )

तेजो वै ब्रह्मवर्चसं प्राची दिक्। ( ऐ० ब्रा० १।८ )

ऊर्द्ध्वाः पुरुषस्य भूयांसः प्राणा यच्चावाञ्चः। ( ऐ० ब्रा० १।२६ )

ऊर्ध्वाः चक्षुर्घ्राणादयः । अवाञ्चो नाभेरर्वाचीने देशे वर्तमानाः । पायुगुह्यादयोऽवाञ्चः प्राणाः, अल्पीयांस इति शेषः । ( सायणः )

दश वै प्राणाः । ( ऐ० ब्रा० ६।२० )

प्राणा ह्यीमानि सर्वाणि भूतान्यनुप्रयन्ति । ( ऐ० ब्रा० २।४० )

प्राणा द्वन्द्वम् । ( ऐ० ब्रा० २।२७ )

प्राणा वा ऋतुयाजाः । ( ऐ० ब्रा० २।२६ )

प्राणा वा ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजाः ।

( ऐ० ब्रा० २।२७ )

तनूपावानः शरीरपालकाः ।

प्राणा वै द्विदेवत्याः । ( ऐ० ब्रा० २।२७ )

प्राणा वै मरुतः स्वापयः । ( ऐ० ब्रा० ३।१६ )

स्वापयः सुषुप्तिकालेऽपि वर्तमाना वायव इत्यर्थः ।

प्राणा वै समिधः । प्राणा ह्यीदं सर्वं समिन्धते यदिदं किंच ।

( ऐ० ब्रा० २।४ )

समिधः समिन्धनहेतवः ।

प्राणास्त इमेऽवाञ्चो रेतस्यो मूत्र्यः पुरीष्य इति ।

( ऐ० ब्रा० १।२० )

रेतस्यः । रेतसे हितः । मूत्र्यः । मूत्राय हितः । पुरीष्यः । पुरीषाय हितः ।

प्राणो वा अपानो व्यानस्तिस्रो देव्यः । ( ऐ० ब्रा० २।४ )

प्राणो वै जातवेदाः । स हि जातानां वेद । यावतां वै स

जातानां वेद ते भवन्ति। येषामु न वेद किमु ते स्युः।

( ऐ० ब्रा० २।३६ )

प्राणो वै तनूनपात्। स हि तन्वः पाति। ( ऐ० ब्रा० २।४ )

*प्राणापानौ वै दैव्या होतारा।* ( ऐ० ब्रा० २।४ )

प्राणो वै वनस्पतिः। ( ऐ० ब्रा० २।१० )

प्राणो वै वयः। ( ऐ० ब्रा० १।२८ )

प्राणो वै सविता। ( ऐ० ब्रा० १।१६ )

देहेन्द्रियप्रेरकत्वात्प्राणस्य सवितृत्वम्।

प्राणो वै होता। प्राणः सर्वं ऋत्विजः। ( ऐ० ब्रा० ६।१४ )

नव वै प्राणाः। ( ऐ० ब्रा० २।१५ )

पुरुषस्य शिरोगतेषु सप्तसु च्छिद्रेषु वर्तमानाः सप्त प्राणाः। अधो भागावस्थितयोर्वर्तमानौ द्वौ। एवं नवसंख्याकाः प्राणाः। ( सायणः )

नव वै प्राणा नव स्वर्गा लोकाः। ( ऐ० ब्रा० ४।१६ )

स्वर्गलोका नव भोगस्थानभेदेन नवविधाः। ( सायणः )

विहृता वा इमे प्राणाः प्राणेनापानोऽपानेन व्यानः।

( ऐ० ब्रा० ६।२८ )

विहृताः परस्परव्यतिरिक्ताः।

सप्त वै शीर्षन्प्राणाः। ( ऐ० ब्रा० १।१७ )

शिरसि छिद्रवर्तिनां प्राणानां सप्तत्वादिति सायणः।

समु वा इमे प्राणा विद्रे ये चेमे ये चेमे। ( ऐ० ब्रा० १।१७ )

सं विद्रे संभूय तिष्ठन्तीत्यर्थः। ये चेमे ये चेमे। ये च शिरस्यवस्थिताः, ये च नाभेरधस्ताद् वर्तमानाः।

स वा अयं प्राणस्त्रेधा विहितः प्राणोऽपानो व्यान इति ।
( ऐ० ब्रा० २।२६ )

उत्तरतः पश्चादयं भूयिष्ठं पवमानः पवते । ( ऐ० ब्रा० १।७ )

वायुरुत्तरपश्चिमयोरन्तरालवर्तिन्या वायव्या दिशि अत्यधिकं सञ्चरतीत्यर्थः ।

वायुर्हि प्राणः । ( ऐ० ब्रा० २।२६ )

वायुर्हि स्वयमात्मानं समिन्धे स्वयमिदं सर्वं यदिदं किञ्च ।
( ऐ० ब्रा० २।३४ )

समिन्धे । व्यापारक्षमं करोतीत्यर्थः । ( सायणः )

वायुर्हीदं सर्वं सद्यस्तरति यदिदं किञ्च । ( ऐ० ब्रा० २।३४ )

वायुर्हीदं सर्वं करोति यदिदं किञ्च । ( ऐ० ब्रा० २।३४ )

विद्युद्धीदं वृष्टिमन्नाद्यं संप्रयच्छति । ( ऐ० ब्रा० २।४१ )

वृष्टेर्वै विद्युज्जायते । ( ऐ० ब्रा० ८।२८ )

अथातो ब्रह्मणः परिमरः ।⋯⋯अयं वै ब्रह्म योऽयं पवते । मेताः पञ्च देवताः परिम्रियन्ते विद्युद् वृष्टिश्चन्द्रमा आदित्योऽग्निः । वद्युद्वै विद्युत्य वृष्टिमनुप्रविशति । सान्तर्धीयते । तां न निर्जानन्ति । यदा वै म्रियतेऽथान्तर्धीयतेऽथैनं न निर्जानन्ति ।⋯⋯ वृष्टिर्वै वृष्ट्वा चन्द्रमसमनुप्रविशति सान्तर्धीयते । तां न निर्जानन्ति ।⋯⋯चन्द्रमा वा अमावास्यायामादित्यमनुप्रविशति । सोऽन्तर्धीयते । तं न निर्जानन्ति ।⋯⋯⋯आदित्यो वा अस्तं यन्नग्निमनुप्रविशति । सोऽन्तर्धीयते । तं न निर्जानन्ति ।⋯⋯

अग्निर्वा उद्वान् वायुमनुप्रविशति। सोऽन्तर्धीयते। तं न निर्जानन्ति।
( ऐ० ब्रा० ८।२८ )

ब्रह्मशब्देनात्र वायुर्विवक्षितः। तस्य वायोः परितो विद्युदादीनां मरणप्रकारः ( अन्तर्धानविधिः ) परिमर इत्युच्यते। तद्भावनारूपस्य कर्मविशेषस्यापि तदेव नामधेयम्। ( सायणः )

उत्तरा ह वै सोमो राजा। ( ऐ० ब्रा० १।८ )

सोमो वै राजामुष्मिँल्लोक आसीत्। त देवाश्च ऋषयश्चाभ्यध्यायन् कथमयमस्मान्सोमो राजागच्छेदिति।…(ऐ० ब्रा० ३ २५)

सोमो वै राजा गन्धर्वेष्वासीत्। तं देवाश्च ऋषयश्चाभ्यध्यायन् कथमयमस्मान् सोमो राजागच्छेदिति।……( ऐ० ब्रा० १.२७ )

ब्राह्मणानां स (=सोमः) भक्षः।……अथ यदि दधि, वैश्यानां स भक्षः। … अथ यद्यपः, शूद्राणां स भक्षः।……अथास्य (=क्षत्रियस्य) एष स्वो भक्षो न्यग्रोधस्यावरोधाश्च फलानि चौदुम्बराण्याश्वत्थानि साक्षाण्यभिषुणुयात्तानि भक्षयेत्। सोऽस्य स्वोभक्षः। ( ऐ० ब्रा० ७।२६ )

अमृतं वा आज्यम्। अमृतं हिरण्यम्। ( ऐ० ब्रा० २,१४ )

आज्यस्य स्वादुत्वेन हिरण्यस्य च दर्शनीयत्वेन प्रियत्वादमृतत्वम्।
( सायणः )

आज्यं वै देवानां सुरभि, घृतं मनुष्याणाम्, आयुतं पितॄणाम्, नवनीतं गर्भाणाम्। ( ऐ० ब्रा० १।३ )

सुरभि योग्यं प्रियमित्यर्थः। सर्पिर्विलीनमाज्यं स्याद् घनीभूतं घृतं विदुः। ईषद्विलीनमायुतम्। ( सायणः )

एतद्वै मधु दैव्यं यदाज्यम् । ( ऐ० ब्रा० २।२ )
तेजो वा एतत्पशूनां यद् घृतम् । ( ऐ० ब्रा० ८।२० )
इन्द्रियं वा एतदस्मिंल्लोके यद्दधि । ( ऐ० ब्रा० ८।२० )
...अथ यदि दधि, वैश्यानां स भक्षः । ( ऐ० ब्रा ७।२६ )
श्यान् वाव किल पशुयावती वपेति । ( ऐ० ब्रा० २।१३ )
रसो वा एष ओषधिवनस्पतिषु यन्मधु । ( ऐ० ब्रा० ८।२० )
अथ यद् दधि मधु घृतं भवत्यपां स ओषधीनां रसः ।
( ऐ० ब्रा० ८।८ )
अथ यत्सुरा भवति क्षत्ररूपं तदथो अन्नस्य रसः ।
( ऐ० ब्रा ० ८।८ )
तेजो वा एतदक्ष्योर्यदाञ्जनम् ( ऐ० ब्रा० १।३ )
आञ्जनस्याक्षितेजस्त्वं लोके प्रसिद्धम् । ( सायणः )
पङ्क्तिर्वा अन्नम् । ( ऐ० ब्रा० ६।२० )
अन्नं हि पञ्चसंख्योपेतम्–प्राश्यं, पेयं, खाद्यं, लेह्यं, निगीर्यमिति ।
आग्नेय्यो ह्योषधयः । ( ऐ० ब्रा० १।७ )
बीजरूपेण सस्यपाकस्तदन्तर्वर्त्यग्न्यधीन इति भावः । ( सायणः )
दक्षिणतोऽग्र ओषधयः पच्यमाना आयन्ति ।
( ऐ० ब्रा० १।७ )

"विन्ध्यपर्वतस्य दक्षिणभागे व्रीह्याद्योषधयोऽग्रे पच्यमाना आयन्ति । तत्तत्स्वामिगृहेष्वागच्छन्ति । विन्ध्यस्योत्तरभागे यवगोधूमचणकादिधान्य-प्राचुर्यम् । तानि च धान्यानि माघफाल्गुनयोः पच्यन्त इति पश्चाद्भा-वीनि। दक्षिणदिग्भागे तु यवादिप्राचुर्याभावात्, प्राचुर्यांश (?) च व्रीह्या-

दीनीति कार्त्तिकमार्गशीर्षयोः पच्यमानत्वादग्रे पाकोऽभिहितः।"
( सायणः )

क्षत्रं वा एतदोषधीनां यद् दूर्वा। ( ऐ० ब्रा० ८।८ )

भौज्यं वा एतदोषधीनां यत् प्रियङ्गवः। ( ऐ० ब्रा० ८।१६ )

सैनान्यं वा एतदोषधीनां यद्यवाः। ( ऐ० ब्रा० ८।१६ )

क्षत्रं वा एतदोषधीनां यद् व्रीहयः। ( ऐ० ब्रा० ८।१६ )

साम्राज्यं वा एतदोषधीनां यन्महाव्रीहयः। (ऐ० ब्रा० ८।१६)

तेजसो वा एष वनस्पतिरजायत यदश्वत्थः। साम्राज्यं वा एतद्वनस्पतीनाम्। ( ऐ० ब्रा० ७।३२ )

ऊर्ध्वो ह्यशायमुदुम्बरः। यद्वै तद्देवा इषमूर्जं व्यभजन्त तत उदुम्बरः समभवत्। तस्मात्स त्रिः संवत्सरस्य पच्यते।
( ऐ० ब्रा० ५।२४ )

ऊर्जो वा एषोऽन्नाद्याद् वनस्पतिरजायत यदुदुम्बरः। भौज्यं वा एतद् वनस्पतीनाम्। ( ऐ० ब्रा० ७।३२ )

ऊर्जो रसात्। भौज्यं भोजनार्हम् ( सायणः )

क्षत्रं वा एतद्वनस्पतीनां यन्न्यग्रोधः। ( ऐ० ब्रा० ७।३१ )

तेजो वै ब्रह्मवर्चसं वनस्पतीनां पलाशः। ( ऐ० ब्रा० २।१ )

सर्वेषां वा एष वनस्पतीनां योनिर्यत्पलाशः। तस्मात्पलाशस्यैव पलाशेनाचक्षतेऽमुष्य पलाशममुष्य पलाशमिति।
( ऐ० ब्रा० २।१ )

यशसो वा एष वनस्पतीरजायत यत् सक्षः। स्वाराज्यं च ह वा एतद् वैराज्यं च वनस्पतीनाम् ( ऐ० ब्रा० ७।३२ )

स्वातन्त्र्येण राजत्वं स्वाराज्यम्। विशेषेण राजत्वं वैराज्यम्।

( सायणः )

बिल्वं ज्योतिरिति वा आचक्षते। ( ऐ० ब्रा० २।१ )

समां समां वै बिल्वो गृभीतस्तस्याद्यस्य रूपम्। आमूलाच्छा-खाभिरनुचितस्तत्पुष्टेः। ( ऐ० ब्रा० २।१ )

समा समा तस्मिन् तस्मिन् संवत्सरे। बिल्ववृक्षो गृभीतः फलैः गृहीतः। अन्नाद्यम् अदनयोग्यमन्नम्। रूपं स्वरूपम्। मूलमारभ्य शाखाभिरनुक्रमेणोपचितो बिल्ववृक्षः। तत्रोपचयनं पुष्टेः स्वरूपम्।

( सायणः )

## (१५) मनुष्यस्य पश्वादेश्च स्वभावादिवर्णनम्

मनुष्यादीनां प्राणिनां स्वभावादिवर्णनमप्यत्र ब्राह्मणे समुपलभ्यमानं नूनं विपश्चितां चेतश्चमत्कारायालम्। एकविंशोऽयं पुरुषः, पाङ्क्तोऽयं पुरुषः, षड्विधो वै पुरुषः, पुरुषो वै वीर्ये प्रतिष्ठितः, ओषध्यात्मा वै पशुः, गावः सर्वेषां प्रेम्ण आस्पदम्, इत्यादयो विचारा मीमांसनीया हृदयाह्लाद-काश्चात्र विषये श्रूयन्ते। तथाहि—

(क) पुरुषः—

एकविंशोऽयं पुरुषः। दश हस्त्या अङ्गुलयो दश पाद्याः। आत्मैकविंशः। ( ऐ० ब्रा० १।१६ )

आत्मशब्देन मध्यदेहो जीवात्मा वा अभिधीयते। ( सायणः )

पाङ्क्तोऽयं पुरुषः पञ्चधा विहितो लोमानि त्वङ् मांसमस्थि मज्जा। ( ऐ० ब्रा० २।१४ )

पञ्चसंख्यायोगात् पुरुषस्य पाङ्क्तत्वम्। ( सायणः )

पुरुषस्य पर्वाणि शिथिराणि सन्ति दृढानि।

(ऐ० आ० ३।१।१)

मनुष्यस्य हि पर्वाणि हस्तपादाद्यवयवसंधयः शिथिलान्यपि तत एव हेतोर्दृढानि सन्ति।

पुरुषो वीर्ये प्रतिष्ठितः सर्वेषां पशूनां वीर्यवत्तमः।

( ऐ० आ० ४।३ )

विदलसंहित इव वै पुरुषः। तद्धापि स्यूमेव मध्ये शीर्ष्णो विज्ञायते। ( ऐ० आ० ४।२२ )

विदलसंहितः। विदलं भागः। ताभ्यां विदलाभ्यां दक्षिणवाम-भागाभ्यां सहितः संयोजितः। तद्धापि तस्मादेव कारणात्। स्यूम स्यूतम्। ( सायणः )

शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रियः। ( ऐ० आ० २।१७ )

षड्विधो वै पुरुषः षडङ्गः। ( ऐ० आ० २।३६ )

तु० "षोढा विहितो वै पुरुष आत्मा च शिरश्चत्वार्यङ्गानि" ( तै० सं० ५।६।६।१ )। द्वौ हस्तौ द्वौ पादावित्यङ्गचतुष्टयम्। आत्मशब्दो मध्यदेहवाची। ( सायणः )

एकं सच्चक्षुर्द्वेधा। ( ऐ० आ० २।१२ )

"वृद्धि चक्षुर्" ( ऋ० १०।७३।११ ) इति चक्षुषो मरीमृज्येत। आजरसं ह चक्षुष्मान् भवति य एवं वेद। ( ऐ० आ० ३।१६ )

मरीमृज्येत। पुनः पुनः शोधयेत्। ( सायणः )

अनिरुक्तं वै रेतो गुहा योन्यां सिच्यते। ( ऐ० आ० ६।२७ )

मुक्ता गर्भा जरायोर्जायन्ते। ( ऐ० ब्रा० १ ३ )

मुष्टी वै कृत्वा गर्भोऽन्तः शेते मुष्टी कृत्वा कुमारो जायते।

( ऐ० ब्रा० १।३ )

यानि वै पुरा संवत्सराद्रेतांसि जायन्ते, यानि पञ्चमास्यानि यानि षण्मास्यानि, स्रोव्यन्ति वै तानि, न वै तैर्भुञ्जते। अथ यान्येव दशमास्यानि जायन्ते यानि सांवत्सरिकाणि तैर्भुञ्जते।

( ऐ० ब्रा० ४।२२ )

स्रोष्यन्ति स्रवन्ति। न वै तैर्भुञ्जते। न तु तैरल्पमासधृतै रेतोभिः पुत्रादिशरीरमनुभवन्ति। ( सायणः )

रेत. पुरुषस्य प्रथमं सम्भवतः सम्भवतीति। ( ऐ० ब्रा० ३।२ )

रेतो वा अग्रेऽथ प्राणाः।......रेतो वा अग्रेऽथात्मा।

( ऐ० ब्रा० ६।३१ )

विद्युद्रमिव वा अन्तरं यमणीय इव च स्थवीय इव च।

( ऐ० ब्रा० १।८१ )

अन्तरत्वं शरीरगतमध्यस्थावयवजातम्। विद्युद्रमिव वै। विविधत्वेन तारतम्येन स्वल्पमेव भवति। तद्यथा, निश्चिन्नासनाड्यादिकम् 'अणीय इव च' अत्यन्तं सूक्ष्ममेव भवति। अन्यच्च 'स्थवीय इव च' अत्यन्तं स्थूलमेव भवति। ( सायणः )

सहैवोल्वेन कुमारो जायते। ( ऐ० ब्रा० १।३ )

समाना वा इमेऽङ्गानामन्ताः। ऐ० ब्रा० ६।८ )

हस्तादीनामन्तास्तुल्या एव दृश्यन्ते। तथाहि, दक्षिणहस्तस्यान्तो यादृशः पञ्चाङ्गुल्युपेत, तादृश एव वामहस्तस्यान्तोऽपि।

आह्ननायाद्धि रेतः सिच्यते । रेतसः प्रजाः प्रजायन्ते ।
( ऐ० ब्रा० ६।३६ )

आह्ननस्यं मैथुनम् ।

उपांश्विव वै रेतसः सिक्तिः । ( ऐ० ब्रा० २।३८ )

किमिव च वै किमिव च रेतो विक्रियते । तत्तदा विकृतं प्रजातं भवति । ( ऐ० ब्रा० ६।१६ )

योनौ निषिक्तं हि रेतः क्रमेण किञ्चित् किञ्चिदेव विक्रियते । विकृतं च सत्पुत्रादिरूपेणोत्पद्यते ।

तस्मादाहुश्चक्षुः पुरुषस्य प्रथमं सम्भवतः सम्भवतीति ।...... कुमारं जातं संवदन्त उप वै शुश्रूषते नि वै ध्यायतीति । ..... कुमारं जातं संवदन्ते प्रतिधारयति वै ग्रीवा अथो शिर इति । . कुमारो जातः पश्चेव प्रचरति ( = दर्शनश्रवणग्रीवोन्नमनादिक्रियाभ्यः पश्चादेव समर्थः सन् हस्ताभ्यां पादाभ्यां चेतस्ततः प्रचरति इत्यर्थः ) । ......कुमारं जातं जघन्या वागाविशति ( = बालको वै हस्तपाद-प्रचारावस्थाया ऊर्ध्वं वक्तुमारभते । अतो जघन्या वागित्युच्यते ) ।
( ऐ० ब्रा० ३।२ )

पराञ्चो गर्भा धीयन्ते पराञ्चः संभवन्ति ।......मध्ये गर्भा धृताः ।......अमुतोऽर्वाञ्चो गर्भाः प्रजायन्ते । (ऐ० ब्रा० ३।१०)

अमुतः । मातुरुदरदेशात् ।

प्रजा वै तन्तुः । ( ऐ० ब्रा० ३।११ )

मध्यतो वै प्रजा अन्नं धिनोति । ( ऐ० ब्रा० ५।३ )

धिनोति प्रीणयति । उदरगतमेवान्नं प्रजाः प्रीणयतीत्यर्थः ।

मुक्ता गर्भा जरायोर्जायन्ते। ( ऐ० ब्रा० १ ३ )

मुष्टी वै कृत्वा गर्भोऽन्तः शेते मुष्टी कृत्वा कुमारो जायते।

( ऐ० ब्रा० १।३ )

यानि वै पुरा संवत्सराद्रेतांसि जायन्ते, यानि पञ्चमास्यानि यानि षण्मास्यानि, स्रोऽयन्ति वै तानि, न वै तैर्भुञ्जते। अथ यान्येव दशमास्यानि जायन्ते यानि सांवत्सरिकाणि तैर्भुञ्जते।

( ऐ० ब्रा० ४।२२ )

स्रोऽयन्ति स्रवन्ति। न वै तैर्भुञ्जते। न तु तैरल्पमासधृतै रेतोभिः पुत्रादिशरीरमनुभवन्ति। ( सायणः )

रेतः पुरुषस्य प्रथमं सम्भवतः सम्भवतीति। ( ऐ० ब्रा० ३।२ )

रेतो वा अग्नेऽथ प्राणाः।······रेतो वा अग्नेऽथात्मा।

( ऐ० ब्रा० ६।३१ )

विच्छुद्रमिव वा अन्तस्त्यमणीय इव च स्थवीय इव च।

( ऐ० ब्रा० १।२१ )

अन्तस्त्यं शरीरगतमभ्यस्थावयवजातम्। विच्छुद्रमिव वै। विविधत्वेन तारतम्येन स्वल्पमेव भवति। तद्यथा, विच्छिन्मासनाड्यादिकम् 'अणीय इव च' अत्यन्तं सूक्ष्ममेव भवति। अन्यच्च 'स्थवीय इव च' अत्यन्तं स्थूलमेव भवति। ( सायणः )

सहैवोल्वेन कुमारो जायते। ( ऐ० ब्रा० १।३ )

समाना वा इमेऽङ्गानामन्ताः। ऐ० ब्रा० ६।८ )

हस्तादीनामन्तास्तुल्या एव दृश्यन्ते। तथाहि, दक्षिणहस्तस्यान्तो यादृशः पञ्चाङ्गुल्युपेतः, तादृश एव वामहस्तस्यान्तोऽपि।

( ख ) पशवः—

एतयोरेव शैशिरयोर्मासयोरागतयोर्ये चैव ग्राम्याः पशवो ये चारण्या अणिमाणमेव तत्परुषिमाणं नियन्ति। ( ऐ० ब्रा० ४।२६ )

अणिमाणं कृशत्वम्। परुषिमाणम् पारुष्यम्।

ओषध्यात्मा वै पशुः। ( ऐ० ब्रा० २।६ )

तस्मादाहुः······पाङ्क्ताः पशव इति। ( ऐ० ब्रा० ३।२३ )

चतुर्भिः पादैर्मुखेन च योगात् पाङ्क्ताः। ( सायणः )

तस्माद्धाप्येतर्हि गव्यं मीमांसमानाः पृच्छन्ति सन्ति तत्रोषा ३ः इति। ऊषो हि पोषः। ( ऐ० ब्रा० ४।२७ )

ऊषाः पशव इति सायणः। ऊषा लवणानीति अपरे (Keith)। ऊषाः शस्यानीति अन्ये ( *Haug* )। गव्यं गोरसं क्षीरादिकमिति सायणः। गवादिपशुभ्यः समुचितं स्थानमिति केचित्।

तस्माद्यद्यपि दूर इव पशूँल्लभते गृहानेवैनानाजिगमिषति। गृहा हि पशूनां प्रतिष्ठा। ( ऐ० ब्रा० ३।२४ )

आजिगमिषति। आनेतुमिच्छति।

तस्माद्धेदं भरतानां पशवः सायंगोष्ठाः सन्तो मध्यन्दिने संगविनीमायन्ति। ( ऐ० ब्रा० ३।१८ )

भरतानामृत्विजाम्। संगविनीम् मध्याह्नकाले घर्मकालीनसन्तापनिवारणाय निर्मितां संगवकालयोग्यां शालाम्।

पशुर्वै मेधः। ( ऐ० ब्रा० २।६ )

पीवोरूपा वै पशवः। ( ऐ० ब्रा० २।३ )

वाजो वै पशवः। ( ऐ० ब्रा० ५।८ )

पशोर्हविष्ट्वेन देवतात्वात्। अन्नं वाजः। ( सायणः )

वामं हि पशवः।……हविर्हि पशवः।……वपुर्हि पशवः।

( ऐ० ब्रा० ५।६ )

वामं रमणीयम्।

विक्षुद्रा इव हि पशवः। ( ऐ० ब्रा० ५।६ )

विक्षुद्राः। विविधाः क्षुद्राः। एकस्मादन्यो न्यूनः, तस्मादप्यन्यो न्यून इति भावः।

सप्त वै ग्राम्याः पशवः। ( ऐ० ब्रा० २।१७ )

तथा च बौधायनः—"सप्त ग्राम्याः पशवोऽजाश्वो गौर्महिषी वराहो हस्त्यश्वतरी च" इति। आपस्तम्बमतानुसारिणस्त्वेवं वर्णयन्ति—

"अजाविकं गवाश्वं च गर्दभोष्ट्रनरास्तथा।
सप्त वै ग्राम्यपशवो गीयन्ते कविसत्तमैः॥" इति। (सायणः)

अश्व. पशूनां जविष्ठः।…अश्वः प्रत्यङ् पदा हिनस्ति।

( ऐ० ब्रा० ५।१ )

प्रत्यङ् पृष्ठतः।

इदमाहुः सुधायां ह वै वाजी सुहितो दधातीति।

( ऐ० ब्रा० ३।३८ )

तस्मात्स उच्चैर्घोषः उपब्दिमान् क्षत्रस्य रूपम्। ऐन्द्रो हि सः। ( ऐ० ब्रा० ४।९ )

सोऽश्वयुक्तो रथः, अश्व एव वा। उपब्दिमान् शब्दोपेतः।

तस्मात्स सृतजवो दुग्धदोहः सर्वेषामेतर्हि वाहनानामनाशिष्ठः।……स द्विरेता वाजी। ( ऐ० ब्रा० ४।९ )

स गर्दभः। सुतजवो गतवेगः। दुग्धदोहो गतक्षीररसः। अनाशिष्टोऽत्यन्तवेगरहितः।''' द्विरेताः। गर्दभाश्वतरजातिद्वयोत्पादकः। वाजी गमनवान्। तु० "रासभमारोह्यन्नभिमन्त्रयते शूद्रोऽसि शूद्रजन्माग्नेयो वै द्विरेताः" ( पारस्करगृह्यसूत्रे ३।१५।६ )।

सर्वस्य वै गावः प्रेमाणं सर्वस्य चारुतां गताः।

( ऐ० ब्रा० ४।१७ )

क्षत्रं वा एतदारण्यानां पशूनां यद् व्याघ्रः।

( ऐ० ब्रा० ८।६ )

(ग) शकुनयः—

निर्ऋत्या वा एतन्मुखं यद्वयांसि यच्छकुनयः।

( ऐ० ब्रा० २।१५ )

निर्ऋतिः काचिद्राक्षसरूपा मृत्युदेवता। अत्र वयःशब्देन पक्षिसामान्यमुच्यते शकुनिशब्देन पक्षिविशेषः। येषां सञ्चारादध्वनीष्टानिष्टसूचकतया मनुष्या व्यवहरन्ति ते शकुनयः। ( सायणः )

(घ) सर्पाः—

त एतेऽपहतपाप्मानो हित्वा पूर्वां जीर्णां त्वचं नवयैव प्रयन्ति। ( ऐ० ब्रा० ६।१ )

ते सर्पाः।

---

इत्येवमैतरेयब्राह्मणमधिकृत्य रीति-नीति-स्वर्ग-यज्ञस्वरूप-तत्तद्देवता-

# समावर्तनसत्रपद्धतिः

[ १६४७ तमस्मिन्संवत्सरे 'गवर्नमेन्ट संस्कृत कालेज, बनारस' इत्याख्य-
सुप्रसिद्धसंस्थायाः सार्धशताब्दीपूर्त्तिस्मारको महोत्सव उत्तरप्रदेश-
राज्यस्य ( तदा संयुक्तप्रान्तस्य ) मुख्यमन्त्रिणः श्रीगोविन्दवल्लभ-
पन्तमहोदयस्य सभापतित्वे महता समारम्भेणोत्साहेन च सपन्न
आसीत्। ततः कालादारभ्यैव उपाधिपरीक्षोत्तीर्णस्नात-
केभ्यः सविधि प्रमाणपत्रादिसमर्पणनिमित्तं प्रतिवर्षं
समावर्तनसत्रस्य व्यवस्था प्रचलिता। महाविद्या-
लयस्यास्य दैर्घकालिक इतिहासे न केवलमिदं
प्रथमतया, किन्तु स्नातकानां पुरस्तात्चैषा शिक्षा-
या विशिष्टानामादर्शानामुद्बोधकत्वेनापि
सत्रस्यास्य विशेषमहत्त्वम्। तदस्मिन्
सत्रे प्रतिवर्षमनुष्ठियमाणा पद्धति-
रधः प्रकाश्यते। पद्धतिरियमन्य-
संस्कृतशिक्षासंस्थाभिरपि
यत्र तत्रानुस्रियत इति
नः संतोषस्य विषयः ]

( १ ) सदस्सपतिः = सभापतिः

( २ ) कुलपतिः = महाविद्यालयाध्यक्षः ( प्रिंसिपल )

(३) प्रस्तोता = स्नातकानामुपस्थापयिता

(४) प्रवक्ता = दीक्षान्त-भाषण-कर्ता

( सत्रमण्डपे* कुलपतेर्भाषणानन्तरम् )

**सदसस्पतिः**—अथातः समावर्तनसत्रमारभध्वम् ।

**कुलपतिः**—भो ब्रह्मन् ! पुरःस्वस्त्ययनमनुब्रूहि ।

( वेदाचार्यः स्वशिष्यगणेन सह अधोनिर्दिष्टान् मन्त्रान् पठेत् )

(१) भद्रं कर्णेभिः शृणुयाम देवा
भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवा ँसस्तनूभि-
र्व्यशेमहि देवहितं यदायुः ॥
( यजु० २५।२१ )

(२) यत् प्रज्ञानमुत चेतो धृतिश्च,
यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऋते किञ्चन कर्म क्रियते,
तन्मे मनः शिवसंकल्पमस्तु ॥
( यजु० ३४।३ )

(३) यस्मिन् ऋचः साम यजू ँषि,
यस्मिन् प्रतिष्ठिता रथनाभाविवाराः ।

---

* प्रथमसमावर्तनसत्रे कुलपतिस्तत्समये महाविद्यालयाध्यक्षः श्रीमङ्गलदेवशास्त्री एतद्ग्रन्थकर्ता ।

कुलपतिः—भोः स्नातकाः ! साधु भवन्तोऽवहिताः शृण्वन्तु।

( श्रुत्वैवं सर्वे स्नातकाः समुत्तिष्ठेयुः )

कुलपतिः—(१) स्नातकाः ! अपि प्रतिजानते भवन्तो यत्सर्वदा स्मृतिमास्थाय आर्यवृत्तमनुतिष्ठद्भिः पाण्डित्यप्रकर्षार्थं च प्रयतमानैर्भवद्भिः काशिकराजकीयमहाविद्यालयीयपरीक्षाणां गौरवस्य मर्यादायाश्च संरक्षणं विधास्यते ?

स्नातकाः—आम्, नूनम् ।

कुलपतिः—(२) स्नातकाः ! अपि प्रतिजानते भवन्तो यद् भारतीयशीलसदाचारपरम्पराया आदर्शमभिलक्ष्य मनसा वाचा कर्मणा च सदा तथा प्रयतिष्यते भवद्भिर्यथा भारतीयसंस्कृतेः सुयशो जगद्व्यापि भवेत् ?

स्नातकाः—आम्, नूनम् ।

कुलपतिः—(३) स्नातकाः ! अपि प्रतिजानते भवन्तो यत् परहितसाधन एवात्महित समीक्षमाणैर्भवद्भिरज्ञानस्यान्यायस्य दैन्यस्य दारिद्र्यस्य च प्रतीकारेण ज्ञानस्य, न्यायस्य, आत्मगौरवस्य, समृद्धेश्च स्थापनया मातृभूमिर्भारतं सबलं, सम्पन्नं, सम्मानास्पदं च यथा सम्पद्येत तथैव प्रयतिष्यते ?

स्नातकाः—आम्, नूनम् ।

( ततः परं स्नातकैः संभूयाधोनिर्दिष्टा प्रतिज्ञा कर्तव्या )

ॐ अग्ने व्रतपते व्रतं चरिष्यामि ।

यस्मिंश्चित्त ँ सर्वमोतं प्रजानां
तन्मे मनः शिवसंकल्पमस्तु ॥

( यजु० ३४।५ )

(४) अग्ने नय सुपथा राये अस्मान्
विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो
भूयिष्ठां ते नमउक्तिं विधेम ॥

( यजु० ४०।१६ )

(५) असतो मा सद्गमय । तमसो मा ज्योतिर्गमय । मृत्योर्माऽमृतं गमय ॥

( बृहदा० उ० १।३।२८ )

(६) यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय ॥

( तैत्ति० उ० १।४।१ )

(७) मन्द्रा कृणुध्वं धिय आतनुध्वं
नावमरित्रपरणीं कृणुध्वम् ।
इष्कृणुध्वमायुधारं कृणुध्वं
प्राञ्चं यज्ञं प्रणयता सखायः ॥

( ऋ० १०।१०१।२ )

कुलपतिः—भोः स्नातकाः ! साधु भवन्तोऽवहिताः शृण्वन्तु।

( श्रुत्वैव सर्वे स्नातकाः समुत्तिष्ठेयुः )

कुलपतिः—(१) स्नातकाः ! अपि प्रतिजानते भवन्तो यत्सर्वदा स्मृतिमारथाय आर्यवृत्तमनुतिष्ठद्भिः पाण्डित्यप्रकर्षार्थं च प्रयतमानैर्भवद्भिः काशिकराजकीयमहाविद्यालयीयपरीक्षाणां गौरवस्य मर्यादायाश्च संरक्षणं विधास्यते ?

स्नातकाः—आम्, नूनम् ।

कुलपतिः—(२) स्नातकाः ! अपि प्रतिजानते भवन्तो यद् भारतीयशीलसदाचारपरम्पराया आदर्शमभिलक्ष्य मनसा वाचा कर्मणा च सदा तथा प्रयतिष्यते भवद्भिर्यथा भारतीयसंस्कृतेः सुयशो जगद्व्यापि भवेत् ?

स्नातकाः—आम्, नूनम् ।

कुलपति :—(३) स्नातकाः ! अपि प्रतिजानते भवन्तो यत् रहितसाधन एवात्महित समीचमार्गैर्भवद्भिरज्ञानस्यान्यायस्य न्यस्य दारिद्र्यस्य च प्रतीकारेण ज्ञानस्य, न्यायस्य, आत्मगौरवस्य, नृदेश्च स्थापनया मातृभूमिर्भारतं सबलं, सम्पन्नं, सम्मानास्पद व यथा सम्पद्येत तथैव प्रयतिष्यते ?

स्नातका :—आम्, नूनम् ।

( ततः परं स्नातकैः संभूयाधो निर्दिष्टा प्रतिज्ञा कर्तव्या )

ॐ अग्ने व्रतपते व्रतं चरिष्यामि ।

तच्छकेयं तन्मे राध्यताम् ।
इदमहमनृतात् सत्यमुपैमि ॥ ( यजु० १।५ ) ।
( ततः परं सर्वे स्नातका उपविशेयुः )

—

कुलपति :—भोः प्रस्तोतः ! अथ स्नातका यथाक्रममुपस्थाप्यन्ताम् ।

प्रस्तोता—माननीयाः सदस्यपतयः ! अहं खलु भवतां समक्षं ………उपस्थापयामि । एभिः / एतेन यथाविधि गुरुशुश्रूषया ……विद्या समधिगता, परीक्षाद्वारा च स्वकीया…… उपाधियोग्यता प्रमाणिता । प्रार्थये यत्प्रमाणपत्रवितरणेन एतान् / एतम् उक्तोपाधिनालंकुर्वन्तु तत्रभवन्त इति ।

—

(उपाधिप्रमाणपत्रदानोत्तरं पदकप्रदानार्थमपि स्नातका अधोलिखितप्रकारेण उपस्थापयिष्यन्ते )

प्रस्तोता—माननीयाः ! अहं खलु भवतां समक्षं………उपस्थापयामि । एतेन………शास्त्रे परीक्षाद्वारा विशेषयोग्यता प्रमाणिता । प्रार्थये यत् स्वर्ण / रजतपदकप्रदानेन एतमलंकुर्वन्तु तत्रभवन्त इति ।

—

( ततः परं कुलपतेरादेशः )

( १ )

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु। मा विद्विषावहै।

( कठोपनिषद्। शान्तिपाठः )

( २ )

सङ्गच्छध्वं सं वदध्वं
स वो मनांसि जानताम्।
देवा भागं यथा पूर्वे,
संजानाना उपासते॥

( ऋ० १०।१९१।२ )

( ३ )

समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति॥

( ऋ० १०।१९१ ४ )

( ४ )

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति—

सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः।

सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्। देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव।

यान्यनवद्यानि कर्म्माणि तानि सेवितव्यानि, नो इतराणि। यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि, नो इतराणि। ये के चास्मच्छ्रेयांसो ब्राह्मणास्तेषां त्वयाऽऽसनेन प्रश्वसितव्यम्।

श्रद्धया देयम्। अश्रद्धयाऽदेयम्। श्रिया देयम्। ह्रिया देयम्। भियाऽदेयम्। संविदा देयम्।

अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः संमर्शिनो युक्ता आयुक्ता अलूक्षा धर्म्मकामाः स्युः, यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः। अथाभ्याख्यातेषु ये तत्र ब्राह्मणाः संमर्शिनो युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तेषु वर्तेरन् तथा तेषु वर्तेथाः।

एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम्। एवं चैतदुपास्यम्॥

(तैत्तिरीयोपनिषत् १।११)

(ततः परं प्रवक्तृमहोदयस्य* भाषणं भविष्यति)

—

* प्रथमसमावर्तनसत्रे महामहोपाध्यायः श्रीविधुशेखरशास्त्रिभट्टाचार्यः प्रवक्तासीत्।

( पृ० १३७ )



म० म० डाक्टर गङ्गानाथ झा,
प्रिंसिपल, गवर्नमेंट संस्कृत कालेज, बनारस
१९१८–१९२३

# सुविचार-माधुकरी

—:o:—

सन्तो मधुव्रताः सान्द्रं
पीत्वा शास्त्ररसामृतम् ।
लोकोत्तरं तथाक्षय्य-
मानन्दमुपभुञ्जते ॥

इदं सत्यं सर्वेषां भूतानां मधु । अस्य सत्यस्य सर्वाणि भूतानि मधु । ( बृहदारण्यकोपनिषद् २।५।१२ )

मधु नो द्यावापृथिवी मिमिक्षतां
मधुश्चुता मधुदुघे मधुव्रते । ( ऋ० ६।७०।५। )

## ऋग्वेदसंहितायाः

अप्स्वन्तरमृतमप्सु भेषजम् । ( १।२३।१९ ) ।

आपश्च विश्वभेषजीः । ( १।२३।२० ) ।

सविता...... अपामीवां बाधते । ( १।३५।६ ) ।

(सविता अमीवां रोगादिबाधामपबाधतेऽपाकरोतीत्यर्थः) ।

न दुरुक्ताय स्पृहयेत् । ( १।४१।६ ) ।

( दुष्टं वाक्यं न कामयेदित्यर्थः ) ।

न दुष्टुतिर्द्रविणोदेषु शस्यते । ( १।५३।१ ) ।

( द्रविणोदेषु = धनदातृषु )

नभो न रूपं जरिमा मिनाति । ( १।७१।१० ) ।

( = नभ इव जरा रूपं हिनस्ति ) ।

ऋतमर्षन्ति सिन्धवः

सत्यं तातान सूर्यः । ( १।१०५।१२ ) ।

पश्यदक्षण्वान् न वि चेतदन्धः । ( १।१६४।१६ ) ।

( ज्ञानदृष्ट्युपेत एव वस्तुतत्त्वं जानाति, अन्धः स्थूलदृष्टिस्तु न विजानातीत्यर्थः ) ।

बहुप्रजा निर्ऋतिमा विवेश ( १।१६४।३२ ) ।

माता पृथिवी महीयम्। (१।१६४।३३)।

एकं सद् विप्रा बहुधा वदन्ति। (१।१६४।४६)।

पुत्रकामो हि मर्त्यः। (१।१७९।५)।

(मनुष्यः खलु कामेन निरुद्ध एव वतत इत्यर्थः)।

नकिरस्य तानि व्रता देवस्य सावितुर्मिनन्ति। (२।३८।७)।

पुरुद्रुहो हि क्षितयो जनानाम् (३।१८।१)।

जायेदस्तम्। (३।५३।४)।

(=जाया इत अस्तम्=जायैव गृहं भवतीत्यर्थः)। तु० "गृहिणी गृहमुच्यते"।

न ऋते श्रान्तस्य सख्याय देवाः। (४।३३।११)।

(श्रमयुक्तादृते परिश्रममन्तरेणेति यावद् देवाः सख्याय न भवन्तीत्यर्थः)।

यादृश्मिन् धायि तमपस्यया विदत्। (५।४४।८)

(यादृशे कामे मनो धत्ते तादृशं कामममपस्यया कर्मणा विन्दत इत्यर्थः)।

य इ स्वयं वहते सो अरं करत्। (५।४४।८)।

(य एव स्वयमनन्यप्रेरितोऽनुतिष्ठति सोऽत्यर्थं कुर्यात। न ह्यन्येन कारितं फलवद्भवतीत्यर्थः)।

अनुमु वाणो अध्येति, न स्वपन्। (५।४४।१३)।

(अनुसंक्रीर्तयन्नेव स्मरति न तु स्वपन्नित्यर्थः)।

यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति। (५।४४।१४)।

विद्वान् पथः पुरएता ऋजु नेषति । ( ५।४६।१ ) ।

( विद्वान् मार्गाभिज्ञः एव पुरएता पुरतो गन्ता सन् पथो मार्गान् ऋजु यथा स्यात्तथा प्रापयतीत्यर्थः ) ।

न दुष्टुती मर्त्यो विन्दते वसु । ( ७।३२।२१ ) ।

( मर्त्यो दुष्टुत्या धनं न विन्दत इत्यर्थः ) ।

न स्रेधन्तं रयिर्नशत् । ( ७।३२।२१ ) ।

(स्रेधन्तं हिंसन्तं स्वकर्माण्यकुर्वन्तमिति यावद् रयिर्धनं न नशत् न प्राप्नोतीत्यर्थः ) ।

श्रिया ऋराय मनः । ( ८।३३।१७ ) ।

ऋतस्य श्रृङ्गमुर्विया वि पप्रथे । ( ८।८६।५ ) ।

( उर्विया=उरु विस्तीर्णं यथा भवति तथा )

मज्जन्त्यविचेतसः । ( ६।६४।२१ ) ।

सत्येनोत्तभिता भूमिः । ( १०।८५।१ ) ।

न वै स्त्रैणानि सख्यानि सन्ति । ( १०।९५।१५ )

न स सखा यो न ददाति सख्ये । ( १०।११७।४ ) ।

केवलाघो भवति केवलादी । ( १०।११७।६ ) ।

## ( सरस्वती )

पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
यज्ञं वष्टु धियावसुः ॥ ( १।३।१० ) ।
चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् ।
यज्ञं दधे सरस्वती ॥ ( १।३।११ )

——

कृधी ( अग्ने ! ) न ऊर्ध्वांश्चरथाय जीवसे । (१।३६।१४)

( दीर्घायुः )

विश्वं विदायुर्जीवसे । ( १।३७।१५ ) ।

उत पश्यन्नश्नुवन्दीर्घमायु-

रस्तमिवेज्जरिमाणं जगम्याम् । ( १।११६।२५ ) ।

( अस्तम्=गृहम् । जरिमाणम्=वृद्धावस्थाम् )

भद्रं जीवन्तो जरणामशीमहि । ( १०।३७।६ ) ।

---

स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव ॥ (५।५१।१५ ) ।

शं नः क्षेमे शमु योगे नो अस्तु । ( ७।८६।८ ) ।

मा गामनागामदितिं वधिष्ट । ( ८।१०१।१५ )

सा मा सत्योक्तिः परि पातु विश्वतः । ( १०।३७।२ ) ।

जगृभ्मा ते दक्षिणमिन्द्र हस्तम् । ( १०।४७।१ ) ।

( ज्ञानम् )

उत त्वः पश्यन्न ददर्श वाच-
मुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं वि सस्रे
जायेव पत्य उशती सुवासाः ॥ ( १०।७१।४ ) ।

(तन्वं वि सस्रे=आत्मानं विवृणुते । वाक् स्वरहस्यं ।प्रयतीत्यर्थः । )

उत त्वं सख्ये स्थिरपीतमाहुर्
नैनं हिन्वन्त्यपि वाजिनेषु ।

अधेन्वा चरति माययैष
वाचं शुश्रुवाँ अफलामपुष्पाम् ॥ ( १०।७१।५ )

( त्वम्=याविदम्, विपरीतम्=विपरीतार्थम्, विज्ञातार्थम्। वाजिनेषु=रहस्यमयवाग्विषयेषु । न हिन्वन्ति=अविद्वांसो न प्राप्नुवन्ति )

( विराट् पुरुषः )

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥
( १०।९०।१२ )।

( वाङ्महिमा )

अहमेव स्वयमिदं वदामि
जुष्टं देवेभिरुत मानुषेभिः।
यं कामये तंतमुग्रं कृणोमि
तं ब्रह्माणं तमृषिं तं सुमेधाम्॥ ( १०।१२५।५ )

( श्रद्धा )

श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ॥ ( १०।१५१।१ )

( संज्ञानम् )

सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्।
देवा भागं यथा पूर्वे संजानाना उपासते॥ ( १०।१९१।२ )।

——

## शुक्लयजुर्वेदसंहितायाः

देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे। ( १।१ )

( प्रार्पयतु समर्पयतु )

धूर्व धूर्वन्तं, धूर्व तं योऽस्मान् धूर्वति ( १।८ )

(धुर्वी हिंसार्थः। धूर्वन्तं हिंसन्तम्। धूर्व विनाशय छिन्धि।)

मा भेः, मा संविक्थाः। ( १।२३ )

( =त्वं मा भैषीः। मा च त्वमुद्विग्नतां यासीः। ओविजी भयचलनयोः। )

अस्माकं सन्त्वाशिषः, सत्या नः सन्त्वाशिषः। ( २।१० )

सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन। ( २।२४ )

( समगन्महि संगता भवामः। तनूभिः कार्यक्षमैः शरीरैः )

येषामध्येति प्रवसन् येषु सौमनसो बहुः। गृहानुपह्वयामहे। ( ३।४२ )

( =देशान्तरं गच्छन्मनुजो येषां गृहाणां स्मरति। इक् स्मरणे। येषु च प्रीत्यतिशयो लभ्यते। तादृशान् गृहान् वयमभिलषामः। )

परि माग्ने दुश्चरिताद् बाधस्वा मा सुचरिते भजा ( ४।२८ )

( परिबाधस्व=परितो निवारय। भज=स्थापय )

सुप्रजाः प्रजाभिः स्याम सुवीरा वीरैः सुपोषाः पोषैः। (८।५३)

वयं राष्ट्रे जागृयाम पुरोहिताः। (९।२३)

(जागृयाम = अप्रमत्ता भवाम)

व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्।
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते॥ (१९।३०)

दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः।
अश्रद्धामनृतेऽदधाच्छ्रद्धां सत्ये प्रजापतिः॥ (१९।७७)

(= सत्यानृतयो रूपे उपलभ्य प्रजापतिस्तयोः पृथक्त्वं कृतवान्। अनृते नास्तिक्यमस्थापयत्। अनृतस्याश्रद्धानिमित्तत्वात्। सत्ये च श्रद्धामास्तिक्यमदधात्)।

विशि राजा प्रतिष्ठितः। (२०।९)। (विशि = प्रजायाम्)।

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम्। आ राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम्। दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायताम्। निकामे निकामे नः पर्जन्यो वर्षतु। फलवत्यो न ओषधयः पच्यन्ताम्। योगक्षेमो नः कल्पताम्। (२२।२२)

(ब्रह्मवर्चसी = यज्ञाध्ययनशीलः। इषव्यः = इषुभिर्विध्यतीति वा, इषौ कुशलो वा। अतिव्याधी = अत्यन्तं विध्यतीति। सप्तिः = अश्वः। पुरन्धिः = पुरं शरीरं सर्वगुणसपन्नं दधातीति। निकामे = नितरां कामनायाम्)।

ब्रह्म सूर्यसमं ज्योतिः। (२३।४८)। (ब्रह्म = वेदः)

अश्मा भवतु नस्तनूः। (२९।४६)। (अश्मा = पाषाण-

तुल्यदृढा )।

विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्न आसुव ।
( ३०।३ )

(दुरितानि पापानि । परासुव दूरे गमय । आसुव आगमय)

तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय
(३१।१८)।

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः ॥ ( ३२।१ )
इदं मे ब्रह्म च क्षत्रं चोभे श्रियमश्नुताम् । ( ३२।१६ )
मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे । ( ३६।१८ )
अदीनाः स्याम शरदः शतम् । भूयश्च शरदः शतात् । (३६।२४)
ईशा वास्यमिदꣳ सर्वं यत्किं च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥ ( ४०।१ )
कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ ( ४०।२ )
हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् । ( ४०।१७ )

---

## सामवेदसंहितायाः

सखायस्त्वा ववृमहे देवं मर्तास ऊतये ॥ (पूर्वार्चिके १।६।८)
अग्ने सख्ये मा रिषामा वयं तव । ( पू० १।७।४ )।
भद्रं भद्रं न आभरेषमूर्जं शतक्रतो ॥ ( पू० २।८।९ )।
इन्द्र त्वादातमिद्यशः । ( पू० ३।१।२ )।

नकि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन्।
नक्येवं यथा त्वम् ॥ ( पू० ३।१।१० )।
जीवा ज्योतिरशीमहि। ( पू० ३।७।७ )।
यत इन्द्र भयामहे ततो नो अभयं कृधि॥ ( पू० ३।९।२ )
अप ध्वान्तमूर्णुहि पूर्धि चक्षुः। ( पू० ४।३।७ )।
देवस्य पश्य काव्यम्। ( पू० ४।४।३ )।
भद्रं नो अपि वातय मनः। ( पू० ५।४।४ )।

(वायोः स्वास्थ्यसंरक्षणे यक्ष्मादिरोगनिवारणे च महिमा)

वात आ वातु भेषजं शंभु मयोभु नो हृदे।
प्र न आयूंषि तारिषत्॥
उत वात पितासि न उत भ्रातोत नः सखा।
स नो जीवातवे कृधि॥
यददो वात ते गृहेऽमृतं निहितं गुहा।
तस्य नो धेहि जीवसे॥ ( उत्त० ९।१।१ )

---

## अथर्ववेदसंहितायाः

ब्रह्म वर्म ममान्तरम्। ( १।१९।४ )
ब्रह्मद्विषं द्यौरभिसंतपाति। ( २।१२।६ )
सर्वांश्चण्डस्य नप्त्यो नाशयामः। ( २।१४।१ )
उद्यन्नादित्यः क्रिमीन्हन्तु निम्रोचन्हन्तु रश्मिभिः। (२।३२।१)
आप इद्वा उ भेषजीरापो अमीवचातनीः। ( ३।७।५ )

( सांमनस्यम् )

अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः ।
जाया पत्ये मधुमतीं वाचं वदतु शन्तिवाम् ॥ ( ३।३०।२ )
मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा ।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ॥ ( ३।३०।३ )
समानी प्रपा सह वोऽन्नभागः
समाने योक्त्रे सह वो युनज्मि ॥ ( ३।३०।६ )

---

( गावः )

यूयं गावो मेदयथा कृशं चिद्
अश्रीरं चित्कृणुथा सुप्रतीकम् ।
भद्रं गृहं कृणुथ भद्रवाचो
बृहद्वो वय उच्यते सभासु ॥ ( ४।२१।६ )

---

( वाङ्महिमा )

अहमेव स्वयमिदं वदामि
जुष्टं देवानामुत मानुषाणाम् ।
यं कामये तं तमुग्रं कृणोमि
तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ ( ४।३०।३ )

---

सत्यासत्ये वचसी पस्पृधाते । ( ८।४।१२ )

## ( अतिथिसत्कारः )

सर्वो वा एष जग्धपाप्मा यस्यान्नमश्नन्ति । ( ९।७।८ )

सर्वो वा एषोऽजग्धपाप्मा यस्यान्नं नाश्नन्ति । ( ६।७।९ )

कीर्तिं च वा एष यशश्च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति । ( ९।८।५ )

अशितवत्यतिथावश्नीयात् यज्ञस्य सात्मत्वाय यज्ञस्याविच्छेदाय तद् व्रतम् । ( ६।८।८ )

---

ब्रह्मचर्येण तपसा राजा राष्ट्रं वि रक्षति ।
आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ॥ ( ११।७।१७ )
ब्रह्मचर्येण कन्या युवानं विन्दते पतिम् । ( ११।७।१८ )
ब्रह्मचर्येण तपसा देवा मृत्युमुपाघ्नत । ( ११।७।१९ )
ये पुरुषे ब्रह्म विदुस्ते विदुः परमेष्ठिनम् । ( १०।७।१७ )
तस्माद्वै विद्वान् पुरुषमिदं ब्रह्मेति मन्यते ।
सर्वा ह्यस्मिन् देवता गावो गोष्ठ इवासते ॥ ( ११।१०।३२ )
माता भूमिः पुत्रो अहं पृथिव्याः । ( १२।१।१२ )
न तिष्ठन्ति न नि मिषन्त्येते
देवानां स्पश इह ये चरन्ति ॥ ( १८।१।९ )
प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु ।
प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये ॥ ( १९।६२।१ )

---

## ( दीर्घायुः )

पश्येम शरदः शतम् । जीवेम शरदः शतम् ।
बुध्येम शरदः शतम् । रोहेम शरदः शतम् ।
पूषेम शरदः शतम् । भवेम शरदः शतम् ।
भूयेम शरदः शतम् । भूयसीः शरदः शतात् ॥
( १९।६७।१—८ )

---

इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति ।
यन्ति प्रमादमतन्द्राः ॥ ( २०।१८।३ )
न दुष्टुतिर्द्रविणोदेषु शस्यते । ( २०।२१।१ )

## शतपथब्राह्मणात्

अमेध्यो वै पुरुषो यदनृत वदति ।

सत्यमेव देवा अनृतं मनुष्याः ।

यशो ह भवति य एवं विद्वान् सत्यं वदति ।

वाग्वै मनसो ह्रसीयसी । अपरिमिततरमिव हि मनः । परिमिततरेव हि वाक् ।

देवान्वा एष उपावर्तते यो व्रतमुपैति ।

एते वा उत्पवितारो यत्सूर्यस्य रश्मयः ।

यथा वै देवानां चरणं तद्वा अनु मनुष्याणाम् ।

तद्धि समृद्धं यत्राद्या कनीयान् आद्यो भूयान् ।

पतिं वा अनु जाया ।

द्वया वै देवाः । देवाः अहैव देवाः । अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः ।

छाययेव वा अयं पुरुषः पाप्मनानुषक्तः ।

इदं मनश्च वाक् च समानमेव सन्नानेव ।

अद्धा हि तयद् भूतम् ।...अनद्धा हि तद् यद्भविष्यत् ।

( अद्धा निश्चितम् )

अद्धा हि तयदद्य । ..अनद्धा हि तद् यच्छ्वः ।

पुरुषो वै प्रजापतेर्नेदिष्ठम् ।

पत्नयो ह्येव स्त्रियै प्रतिष्ठा ।
सुवासा एव बुभूषेत् ।...अप्यश्लीलं सुवाससं दिदृक्षन्ते ।
( अश्लीलमसुन्दरम् )

---

## ऐतरेयब्राह्मणात्

ब्रह्म च क्षत्रं च संश्रिते ।
शिरो वा एतद्यज्ञस्य यदातिथ्यम् ।
एतद्वै वाचो जितं यद्ददामीत्याह ।
प्रजा वै तन्तुः ।
यो वै भवति यः श्रेष्ठतामश्नुते तस्य वाचं प्रोदितामनुप्रवदन्ति ।
अथो खल्वाहुः । कोऽर्हति मनुष्यः सर्वं सत्यं वदितुम् । सत्यसंहिता वै देवा अनृतसंहिता मनुष्या इति ।
व्यतिषक्त इव वै पुरुषः पाप्मना । ( व्यतिषक्तो मिश्रितः ) ।
परोक्षप्रिया इव हि देवाः ।
सं वै गुरुर्भारः शृणाति ।
( संशृणाति भारवाहकान् विनाशयति )
यां वै दृप्तो वदति यामुन्मत्तः सा वै राक्षसी वाक् ।
(तथोत्तररामचरिते-"ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः")
ईश्वरो हास्य वित्ते देवा अरन्तोर्यद्वा अयमात्मनेऽलममंस्तेति ।

( अरन्तोरीश्वरः = अक्रीडितुं समर्था भवन्ति। एतस्य वित्तं द्विषन्तीत्यर्थः। स्ववर्तमानावस्थायामसंतुष्टो यः समुत्कृष्टतराव-स्थावाप्तये यतते तस्यैव देवाः सहाया भवन्तीति हृदयम् )

परिमितं वै भूतम्, अपरिमितं भव्यम्।

अशनाया वै पाप्माऽमतिः।

( अशनाया क्षुधा, अमतिर्बुद्धिभ्रंशः )

यावन्तः पृथिव्यां भोगा यावन्तो जातवेदसि।

यावन्तो अप्सु प्राणिनां भूयान्पुत्रे पितुस्ततः॥

सखा ह जाया, कृपणं ह दुहिता, ज्योतिर्ह पुत्रः परमे व्योमन्।

राष्ट्राणि वै विशः।

---

## गोपथब्राह्मणात्

स मनसा ध्यायेद्—यद्वा अहं किञ्चन मनसा ध्यास्यामि तथैव तद्भविष्यति। तद्ध स्म तथैव भवति।

यज्ञस्य विरिष्टमनु यजमानो विरिष्यते, यजमानस्य विरिष्टमन्वृत्विजो विरिष्यन्ते।

रूपसामान्यादर्थसामान्यं नेदीयः।

व्रतेन वै ब्राह्मणः संशितो भवति।

अनिष्टयज्ञा न तरन्ति लोकान्।

ऋतुसन्धिषु वै व्याधिर्जायते।

यत्र ह्येव मनस्तद् वाक्। यत्र वै वाक् तन्मनः। इत्येते द्वे योनी एकं मिथुनम्।

एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धम्। यत्कर्म क्रियमाणमृग्य-जुर्वाभिवदति।

उत्तमे वयसि पुत्रान् पितोपजीवति।

एतद्वै मनुष्येषु सत्यं यच्चक्षुः। तस्मादाहुराचक्षाणमद्रागिति। स यद्याहाद्राक्षमिति तथा हास्य श्रद्दधति। यद्यु वै स्वयं वै दृष्टं भवति न बहूनां जनानामेव श्रद्दधाति।

# ईशावास्योपनिषदः

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्॥ १ ॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥ २ ॥

असुर्या नाम ते लोका अन्धेन तमसावृताः।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥ ३ ॥

कविर्मनीषी परिभूः स्वयम्भूर्
याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः॥ ८ ॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये॥ १५ ॥

अग्ने नय सुपथा राये अस्मान्
विश्वानि देव वयुनानि विद्वान्।
युयोध्यस्मज्जुहुराणमेनो
भूयिष्ठां ते नमउक्तिं विधेम॥ १८ ॥

( वयुनानि = प्रज्ञानानि कर्माणि वा। युयोधि = पृथक् कुरु। जुहुराणम् = कुटिलम्, प्रतिबन्धकम्। नमउक्तिम् = नमस्कार-वचनम् )

## केनोपनिषदः

[ ॐ आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च। सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणमस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु। ॐ शान्तिः शान्तिः शान्तिः ॥ ]

न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितादथो अविदितादधि इति शुश्रुम पूर्वेषां ये नस्तद् व्याचचक्षिरे ॥ १। ३ ॥

यस्यामतं तस्य मतं मतं यस्य न वेद सः।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ २। ३ ॥

इह चेदवेदीदथ सत्यमस्ति
न चेदिहावेदीन्महती विनष्टिः।
भूतेषु भूतेषु विचित्य धीराः
प्रेत्यास्माल्लोकादमृता भवन्ति ॥२।५॥

---

## कठोपनिषदः

न वित्तेन तर्पणीयो मनुष्यः ॥१।१।२७॥

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्
ते उभे नानार्थे पुरुषं सिनीतः।
तयोः श्रेय आददानस्य साधु भवति
हीयतेऽर्थाद् य उ प्रेयो वृणीते ॥१।२।१॥

श्रेयश्च प्रेयश्च मनुष्यमेतस्
तौ संपरीत्य विविनक्ति धीरः ।
श्रेयो हि धीरोऽभि प्रेयसो वृणीते
प्रेयो मन्दो योगक्षेमाद् वृणीते ॥१।२।२॥

अविद्यायामन्तरे वर्तमाना
स्वयंधीराः पण्डितं मन्यमानाः ।
दन्द्रम्यमाणा परियन्ति मूढा
अन्धेनैव नीयमाना यथान्धाः ॥१।२।५॥

तं दुर्दर्शं गूढमनुप्रविष्टं
गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं
मत्वा धीरो हर्षशोकौ जहाति ॥१।२।१२॥

( ओंकारमहिमा )

सर्वे वेदा यत्पदमामनन्ति
तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् ॥१।२।१५॥

एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥१।२।१६॥

एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥१।२
॥

नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्
तस्यैष आत्मा विवृणुते तनूँ स्वाम् ॥१।२।२२॥
नाविरतो दुश्चरितान् नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥१।२।२३॥

---

आत्मानं रथिनं विद्धि शरीरँ रथमेव च ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ १।३।३॥
इन्द्रियाणि हयानाहुर्विषयाँस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥१।३।४॥
यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥१।३।६॥
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥१।३।६॥
उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत ।
क्षुरस्य धारा निशिता दुरत्यया
दुर्गं पथस्तत्कवयो वदन्ति ॥१।३।१४॥

---

पराञ्चि खानि व्यतृणत्स्वयंभू-
स्तस्मात्पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षद्
आवृत्तचक्षुरमृतत्वमिच्छन् ॥२।१।१॥

---

न प्राणेन नापानेन मर्त्यो जीवति कश्चन।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ २।२।५ ॥

---

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥२।३।१०॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ २।३।११ ॥

---

## मुण्डकोपनिषदः

द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते ॥ १।१।४-५ ॥

प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा
जरामृत्युं ते पुनरेवापि यन्ति ॥ १।२।७ ॥

अविद्यायां बहुधा वर्तमाना
वयं कृतार्था इत्यभिमन्यन्ति बालाः।
यत्कर्मिणो न प्रवेदयन्ति रागात्
तेनातुराः क्षीणलोकाश्च्यवन्ते ॥ १।२।९ ॥

इष्टापूर्त्तं मन्यमाना वरिष्ठं
नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ॥१।२।१०॥

—

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥२।२।४॥

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनु भाति सर्वं
तस्य भासा सर्वमिदं विभाति ॥ २।२।१०॥

द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्य-
नश्नन्न्यो अभिचाकशीति ॥ ३।१।१॥

—

( सत्यस्य महिमा )

सत्येन लभ्यस्तपसा ह्येष आत्मा
सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ॥३।१।५॥

सत्यमेव जयते नानृतं
सत्येन पन्था विततो देवयानः ।
येनाक्रमन्त्यृषयो ह्याप्तकामा
यत्र तत्सत्यस्य परमं निधानम् ॥ ३।१।६॥

यं यं लोकं मनसा संविभाति
विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जायते तांश्च कामांस्
तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः ॥३।१।१०॥
कामान्यः कामयते मन्यमानः
स कामभिर्जायते तत्र तत्र ।
पर्याप्तकामस्य कृतात्मनस्तु
इहैव सर्वे प्रविलीयन्ति कामाः ॥३।२।२॥

---

नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥३।२।३॥
नायमात्मा बलहीनेन लभ्यो
न च प्रमादात्तपसो वाप्यलिङ्गात् ॥३।२।४॥

स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति। तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥३।२।९॥

---

## माण्डूक्योपनिषदः

ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव। यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव ॥१॥

---

## तैत्तिरीयोपनिषदः

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्म्मं चर । स्वाध्यायान्मा प्रमदः । आचार्य्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः ।

सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव ।

यान्यनवद्यानि कर्म्माणि तानि सेवितव्यानि, नो इतराणि । यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि, नो इतराणि । ये के चास्मच्छ्रेयांसो ब्राह्मणाः तेषां त्वयाऽऽसनेन प्रश्वसितव्यम् ।

श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भियाऽदेयम् । संविदा देयम् ।

अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः सम्मर्शिनो युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु ये तत्र ब्राह्मणाः सम्मर्शिनो युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तेषु वर्तेरन् तथा तेषु वर्तेथाः ।

एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् ॥१।११ ॥

रसो वै सः । रस ँ ह्येवायं लब्ध्वानन्दी भवति ॥२।७॥

यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद् ब्रह्मेति ॥३।१॥

---

## छान्दोग्योपनिषदः

त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः, ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् । सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति ॥२।२३।१॥

अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति, यो मध्यमस्तन्मा ँ सम्, योऽणिष्ठस्तन्मनः ।...... अन्नमय ँ हि सोम्य मनः ॥ ६।५।१,४ ॥

अधीहि भगव इति होपससाद सनत्कुमारं नारदः । त ँ होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति । स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेद ँ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्य ँ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां ँ सर्पदेवजनविद्यामेतद्भगवोऽध्येमि ॥७।१।१-२॥

---

मनो वाव वाचो भूयः ॥ ७।३।१ ॥

संकल्पो वाव मनसो भूयान् । यदा वै संकल्पयतेऽथ मनस्यत्यथ वाचमीरयति ॥ ७।४।१ ॥

चित्तं वाव संकल्पाद् भूयः। यदा वै चेतयतेऽथ संकल्पयतेऽथ मनस्यत्यथ वाचमीरयति ॥७।५।१॥

ध्यानं वाव चित्ताद् भूयः ॥ ७।६।१ ॥

विज्ञानं वाव ध्यानाद् भूयः ॥ ७।७।१ ॥

---

यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्यः ॥ ७।२३।१ ॥

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा। अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्। यो वै भूमा तदमृतम्, अथ यदल्पं तन्मर्त्यम् ॥ ७।२४।१ ॥

---

आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः। स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ॥ ७।२६।२ ॥

---

## बृहदारण्यकोपनिषदः

असतो मा सद्गमय। तमसो मा ज्योतिर्गमय। मृत्योर्माऽमृतं गमय ॥ १।३।२८ ॥

द्वे वाव ब्रह्मणो रूपे मूर्त्तं चैवामूर्त्तं च मर्त्यं चामृतं च स्थितं च यच्च त्यच्च ॥ २।३।१ ॥

अमृतत्वस्य नाशास्ति वित्तेनेति ॥ २।४।२ ॥

न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम् ॥ २।४।५ ॥

अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निःश्वसितानि ॥ २।४।१० ॥

अयमात्मा सर्वेषां भूतानां मधु। अस्यात्मनः सर्वाणि भूतानि मधु। यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिदं ब्रह्मेदं सर्वम् ॥ २।५।१४ ॥

स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा। तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः ॥ २।५।१५ ॥

एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति ॥ ३।५।१ ॥

यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिभूतम् ॥ ३।७।१५ ॥

यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति। यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः। अथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात्प्रैति स ब्राह्मणः ॥३।८।१०॥

---

## श्वेताश्वतरोपनिषदः

स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम्।
ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥१।१४॥
यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥६।२०॥

---

## नारायणोपनिषदः

यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति ॥११॥

मेधा देवी जुषमाणा न आगाद्
विश्वाची भद्रा सुमनस्यमाना।
त्वया जुष्टा नुदमाना दुरुक्तान्
बृहद्वदेम विदथे सुवीराः ॥४१॥

सत्यं परं परꣳ सत्यꣳ सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन। सताꣳ हि सत्यं तस्मात्सत्ये रमन्ते।……मानसमिति विद्वाꣳसस्तस्माद् विद्वाꣳस एव मानसे रमन्ते ॥७८॥

---

## मुक्तिकोपनिषदः

लोकवासनया जन्तोः शास्त्रवासनयापि च ।
देहवासनया ज्ञानं यथावन्नैव जायते
शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वास
पौरुषेण प्रयत्नेन योजनीया शुभे प
द्वे बीजे चित्तवृक्षस्य प्राणस्पन्दनवा. . .
एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥२।२७॥
हस्तं हस्तेन संपीड्य दन्तैर्दन्तान् विचूर्ण्य च ।
अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः ॥२।४२॥
*तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।*
दिवीव चक्षुराततम् ॥२।७७॥

## निरुक्तात्

### (वेदानामर्थज्ञानस्य प्रशंसा अज्ञानस्य निन्दा च)

स्थाणुरयं भारहारः किलाभू—
दधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकल भद्रमश्नुते
नाकमेति ज्ञानविधूतपाप्मा॥
यद् गृहीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥१।१८॥

(स्थाणुर्वृक्षः। स हि पत्रपुष्पफलानामात्मीयानां धारणमात्रेणैव संबद्ध्यते, न तज्जैर्गन्धरसरूपस्पर्शोपभोगसुखैः। इत=एव। गृहीतं गुरुमुखात्। अविज्ञातमर्थतः।)

### (केऽध्यापनीयाः?)

विद्या ह वै ब्राह्मणमा जगाम
गोपाय मा शेवधिष्टेऽहमस्मि।
असूयकायानृजवेऽयताय
न मा ब्रूया वीर्यवती तथा स्याम्॥१॥
य आतृणत्त्यवितथेन कर्णा-
वदुःखं कुर्वन्नमृतं संप्रयच्छन्।

